


# विद्या प्रसारक मंडळ, ठाणे

| पुस्तकाचे नाव | : | Collection of Sikhas |
|---|---|---|
| संपादक | : | Vyasa, Pandit Yugalakishor |
| प्रकाशक | : | Benaras : M/s Braj B Das and Co. |
| प्रकाशन वर्ष | : | 1890 |
| पृष्ठे | : | 282 pgs. |

**गणपुस्तक**

**विद्या प्रसारक मंडळाच्या**

**“ग्रंथालय” प्रकल्पांतर्गत निर्मिती**

गणपुस्तक निर्मिती वर्ष : २०१४

गणपुस्तक क्रमांक : ७९

BENARES SANSKRIT SERIES;

A

COLLECTION OF NSKRIT WORKS

EDITE IE

PANDITS OF THE BEN SKRIT COLLEGE,

UNDER THE SU

R. T. H. Gi

G. THIBAUT

*No. 40.*

# श्रीमद्याज्ञवल्क्यादिमहर्षिप्रणीतः शिक्षासङ्ग्रहः ।

कश्चिद्व्याख्यानयुतः ।

श्रीमत्काशिकराजकीयपाठशालाधीतविद्येन श्रीमन्मिथिलामण्डलाधीशतो लब्धवैदुष्यप्रतिष्ठेन काशीस्थसुप्रसिद्धविद्वज्जनसंस्थापितवेदविद्यालयाध्यापकेन च पाठकोपाह्वश्रीमद्युगलकिशोरव्यासेन निर्म्मिताशिक्षाकीर्त्तिप्रकाशाख्यटिप्पण्या समेतः शोधितः प्रकाशितश्च ।

# A COLLECTION OF ŚIKSHÁS BY YÁJÑAVALKYA AND OTHERS,

WITH COMMENTARIES ON SOME OF THEM.

EDITED AND ANNOTATED BY PANDIT YUGALAKIŚORA VYÁSA

LATE SCHOLAR OF THE BENARES SANSKRIT COLLEGE.

**Fasciculus II.**

*BENARES:*

PUBLISHED BY MESSRS. BRAJ B. DAS & CO.

PRINTED AT THE BENARES PRINTING PRESS.

1890.

लो न तु नादः कदा च न ॥ ४० ॥ जहि शत्रून् क्रा-
न् वनस्पतीन् परिधीन् छिणन्ति शत्रूँर रनपव्यय-
तः ॥ अनुरङ्गाः पञ्चैकार्द्धमात्रिका भवन्ति ॥ ४१ ॥
भूषा भिन्नो वसुश्चैव अञ्जनाः परिकीर्त्तिताः॥ एकार्द्ध-
मात्रिकां स्थित्वा पञ्चैतेऽनुनासिकाः ॥ ४२ ॥ पञ्च
रङ्गाः प्रवर्त्तन्ते घातनिर्घातवञ्चिणः ॥ अच्छिणः प्रच्छि-
णो ज्ञेयो यथाऽऽद्देऊङ्क्ष निदर्शनम् ॥ ४३ ॥ (१) द्देवाँ
२ ॥ ऽआसादयेति घातः । (२) द्देवाँ २ ॥ ऽइद्देषीति
निर्घातः । (३) द्देवाँ २ ॥ ऽउपागादिति वञ्चिणः ।
(४) द्देवाँ २ ॥ ऽऋतुभिरिति अच्छिणः । (५) अमिचाँ
२ऽ॥ ओषतादिति प्रच्छिणः ॥ द्विमात्रो मात्रिको वाऽपि
नासामूलं समाश्रितः ॥ अन्ते प्रयुज्यते रङ्गः पञ्चभिः
नुर्वनासिकैः ॥ ४४ ॥ बरमहाँग्र बडादित्यो ह्यद्य द्देव म-
हाँ २ ॥ ऽअसि ॥ बट्सूर्यस्य तु सचातो महारङ्गाः प्रकी-
र्त्तिताः ॥ ४५ ॥ परिते परिमाग्ने च अद्दश्रं परिकी-
र्त्तिताः ॥ यस्माद्दयं प्रदृश्यन्ते अतिरङ्गाः प्रकीर्त्तिताः ।

---

(१) २२ । १७ ॥
(२) २३ । १६ ॥

४६ ॥ (१) अग्ना३ इ पत्नीवन्त्सजोषी३ उदीचीनि-
ति हि: ॥ तिरश्चीनो विततः पृच्छामि त्वां वायुरनि-
लमिति सप्त प्लुता भवन्ति ह्यष्टमो न विद्यते ॥ ४७ ॥
मनो जूतिश्च वायुश्च प्लुतमेकं द्विधाकृतम् ॥ ओकारा-
द्याः प्लुताः सर्वे न विकल्प्यः कदाचन ॥ ४८ ॥ षडङ्गु-
तु जात्यस्य ह्रस्वस्यानुपदस्य च ॥ चतुर्थभागमात्रं स्याङ्गुय-
स्यैव वर्त्तते ॥ ४९ ॥ शून्ये गृहे पिशाचोऽपि गर्जे-
न च दृश्यते ॥ एवं वर्णाः प्रयोक्तव्या (२) उपहूयन्ति-
ति दर्शनम् ॥ ५० ॥ स्फुरितं चिबुकोन्मूलं वायुना स-
मपूरितम् ॥ मण्डूकस्फुरणं नाम (३) अपाम्फेनेन निदर्श-
नम् ॥ ५१ ॥ इडे रन्तेऽभिप्सवं कृतस्य ते, पातन्नो, वृष-
युन्द्रे० सुराणम् । इडेऽरन्ते ॥ पदकाले तु वाक्ये च
हस्ताः पञ्च सरस्वति’ ॥ अकारो द्वौ मकारस्य रेफस्त-
दुपरि स्थितः ॥ अशरीरं यमं विद्यात्तस्याङ्गुलीति
(४) निदर्शनम् ॥ (५) इयन्ते, याम्यां, सुवीरान्
सुप्रजाः’ । प्रजाः’ । रयिमतां सख्याय । प-

(१) इदं गद्यात्मकं पद्यं केचिन्मतमवलम्ब्याङ्को लिखितः ॥ उदाहरणाङ्काः प्राति-
शाख्यतो ज्ञेयाः ॥

(२) १७ । ६ ॥

(३) १९ । ७१ ॥

(४) २ । १४ ॥

(५) मूलस्योदाहरणानि संहितातो ज्ञेयानि बुधैरिति ॥

रो दिवा पृथिव्या इति षट् पृथिव्याः स्वरान्ताः ॥ लोहकारइवा, कश्चिं भस्मसात्कुरुते यदि ॥ एवं वर्णाः प्रयोक्तव्याः संवत्सरो निदर्शनम् ॥ ५३ ॥ आयसं च यथा तप्तं निःक्षिपेदप्सु मध्यतः ॥ तच्छब्दं कुरुते प्राज्ञः परिवत्सरो निदर्शनम् ॥ ५४ ॥ कच्छाकारं पठेयस्तु कूर्मपृष्ठो विधीयते ॥ एवं च कुरुते प्राज्ञः (१) कव्याय इति दर्शनम् ॥ ५५ ॥ यथा मीनाश्रिनः पक्षिणऽ उत्पतन्ति पतन्ति च ॥ एवं वर्णाः प्रयोक्तव्याः (२) कव्यायेय इति दर्शनम् ॥ ५६ ॥ कूर्मपृष्ठं परित्यज्य कर्तव्यमल्पपल्लवम् ॥ एवं हि कुरुतेऽभिज्ञो (३) देवस्य त्वेति दर्शनम् ॥ ५७ ॥ कुक्कुटः कामलुब्धो वा ककारद्वयमुच्चरेत् ॥ एवं वर्णाः प्रयोक्तव्याः (४) कुक्कुटोऽसि निदर्शनम् ॥ ५८ ॥ कुक्कुटी कामलुब्धा च कुक्कुकी पुनः पुनः ॥ तच्छब्दं कुरुते प्राज्ञः कुक्कुटोऽसि निदर्शनम् ॥ ५९ ॥ यथा मारुतराक्रान्तो निश्वासो लघुचेतसः ॥ एवं वर्णाः प्रयोक्तव्या (५) होता यक्षन्निदर्शनम् ॥ ६० ॥ यथा बा-

(१) १७ । ९६ ॥

(२) द्वितीयोदाहरणं 'ख' पुस्तकपाठश्च ॥

(३) १ । १० ॥

लस्य सर्पस्य निश्श्वासो लघुचेतसः ॥ एवः
र्त्तव्यो ह्कारपरिवर्ज्जितः ॥ ६१ ॥ यथा पुः
ह्याश्चुम्बतीच पुनः पुनः ॥ तन्मुखं कुरुते :
ज्ञानऽइति दर्शनम् ॥ ६२ ॥ यथा कामातुः
ब्दं करोति यादृशम् ॥ तच्छब्दं कुरुते प्र
सिऽह्मसि निदर्शनम् ॥ ६३ ॥ यथा र
रोषेण प्रतिधावति ॥ एवं वर्णाः प्रयोक्तव्य
किरीविना, दर्शनम् ॥ ६४ ॥ मूत्रं करोति
निं कुर्वीत यादृशीम् ॥ तन्मुखं कुरुते प्रा
दुन्दुभे निदर्शनम् ॥ ६५ ॥ उकारान्ते उक
ते चोभयोर्यदि ॥ द्विरौष्ठ्यन्तु विजानीया
व(ः स्वर्न्निदर्शनम् ॥ ६६ ॥ एकयत्नो भवेद
ष्ठ्यन्तदुच्यते ॥ द्विर्त्रिभिश्च चतुष्कं च चत
परम् ॥ ६७ ॥ अथ सादृश्यविज्ञेयः सम
योः ॥ न्यूनाधिकानि तान्येव चक्षुषीति वि
६८ ॥ विश्वेदेवास्तमुत्वा च असौ यस्तु व
ये देवा नमस्तेऽस्तु वाजोन(ः सप्त चक्षुषी ।

(१) ११ । १ ॥
(२) ५ । १० ॥
(३) [illegible]

मानाचरबाधे च सन्ध्येकाचरचक्षुषी ॥ समानवर्णयोगं च सम्प्रधानैव चक्षुषी ॥ ७० ॥ मन्त्रो मित्रस्तथा वातो ऊर्द्ध्वमेनं प्रचक्षते ॥ मानस्तोके तनये तु चक्षुषी च चतुष्टयम् ॥ ७१ ॥ पूर्वायां कण्डिकां दृष्ट्वा अपरा सह सँय्युता ॥ तदेव नामग्रहणं न विकल्पः कदा चन ॥ ७२ ॥ पूर्वा विद्धा परान्या च कण्डिका यत्र दृश्यते ॥ चपला चैव सा ज्ञेया (१) आच्छच्छन्दो निदर्शनम् ॥ ७३ ॥ तिस्रो ह्यर्द्धा अभित्यं च तिस्रोऽअर्द्धा प्रजापतिः ॥ पुनन्तु मेति चत्वारि वायुः पञ्च ततः परम् ॥ ७४ ॥ अनाधृष्टा च यस्यैव एषोस्यर्द्ध चतुष्टयम् ॥ सँव्वत्सरोऽसि चत्वारि द्यौःऽशान्तिश्चार्द्धयोर्द्वयोः ॥ ७५ ॥ क्वचित्स्वाहा पृथक्कुर्य्यात्क्वचिद्युक्तं तु कारयेत् ॥ क्वचित्स्वादौ विजानीयात्क्वचित्स्वान्ते विधीयते ॥ ७६ ॥ वाक्यकालेऽवसाने वा स्वाहान्ते चाहुतिं क्षिपेत् ॥ मन्त्रभागं पृथक्कुर्य्यात्स्वाहाकारं पृथक्पृथक् ॥७७॥ स्वाहादौ च भवेद्वाक्यं (२) नमस्तां नमसस्तथा ॥ अन्ते चादौ पुनस्त्वान्ते (३) काय स्वाहेति दर्शनम् ॥ ७८ ॥ अचराशीतिरेकस्य प्रथमा कण्डिका स्मृता ॥ लचणोक्त-

(१) १५।५॥

प्रागमविकाराभ्यां वाक्यानामेव निर्णयः ॥९०॥ क्वनेषु-
ऽव्यक्तरितं च, अष्टौ व्यस्तस्तथैव च ॥ (१) नामग्रह-
णकाले तु गुरुरेव न संशयः ॥ ९१॥ ग्रन्थे च स्वस्त्या
चित्रऽउपप्रागात्समुद्रवः ॥ स्वरितो वाक्यकालेषु उ-
दात्तं नोपपद्यते ॥ ९२ ॥ एतूषु शुक्रा जाते च अ-
भित्त्वा गोमंदूषुणा ॥ स्वरितो वाक्यकालेषु न चोर्ध्वं-
क्षीयते करम् ॥ ९३ ॥ असन्नमीमदन्त च अहरहस्त-
थैव च ॥ वाक्यं च स्वरितं विद्यात्पाठकाले यथा क्र-
मम् ॥ ९४ ॥ ऊष्माणो यत्र दृश्यन्ते ह्यन्तस्थास्तु तथैव च ॥
गुरुस्तत्रैव विज्ञेयोऽस्वर्यसह संयुतः ॥९५॥ अन्तस्थपद-
संयोगे विशेषो नोपपद्यते ॥ अशरीरं यमं विद्यादन्तस्थः
पिण्डनायकः ॥ ९६ ॥ सद्यो जातः समुद्रोऽसि प्रथमाद्य
व्यवस्थया ॥ एवं वर्णाः प्रयोक्तव्या गुरवोऽत्र न संशयः ॥
९७ ॥ अभिनीतं निपातं वा जात्यं वा स्वरितं विदुः ॥
पदकाले भवन्त्येवं पाठकाले यथाक्रमम् ॥ ९८ ॥ त-
व श्यावो मन्होऽश्नाले व्युत्थैव दृश्यते ॥ प्रथमोऽत्र
लघुर्ज्ञेयो द्वितीयस्तु गुरुर्भवेत् ॥ ९९ ॥ द्वादशैतानि
नामानि देवता च तथैव च ॥ अन्यथा निरयं याति
सम्यक् पाठमजानतः ॥ १०० ॥ (२) छाया च्छिद्रा त-

(१) इमान्युदाहरणानि संहितापाठस्थानि बोध्यानि । अन्येषामुदाहरणानामङ्काः शिक्षान्तराद्ग्राह्याः ॥

घा छन्दश्छकारा लघुसञ्ज्ञकाः ॥ ह्रस्वा वा यदि वा
दीर्घाः शेषा द्वित्वे प्रतिष्ठिताः ॥ १०१ ॥ दीर्घादग्रे
छकारोऽपि ह्रस्वादग्रे तथैव च ॥ द्वित्वाक्षरं विजा-
नीयादिति शास्त्रविधानतः ॥ १०२ ॥ दीर्घादग्रे तु यो
दीर्घो गिरिशा वर्म्मणा तथा ॥ गुरुरेव स मन्तव्यश्छा-
दयामि निदर्शनम् ॥ १०३ ॥ मा त्वा यऽआक्लमदाश्चैव
सह्स्तोमास्तथैव च ॥ पाठमध्ये लघुलोणि पदकाले
गुरुर्भवेत् ॥ १०४ ॥ पशुभिर्य्यजुर्भिराप्यन्ते तस्माद्दृच
च्छात्तथैव च ॥ ऋचार्द्धे तु छकारो न त्रिसँय्योगं कदाच-
न ॥१०५॥ न सँय्योगं न द्विर्भावश्छकारो मृदुरुच्यते ॥ अ-
वसाने गुरुं विद्याच्छौनको वाक्यमब्रवीत् ॥१०६॥ निपा-
तं चाभिनीतं च शेषं नीचतरं क्रमात् ॥ त्रिस्वरं तं वि-
जानीयाद्धोता अोजो निदर्शनम् ॥१०७॥ द्वौ ककारौ स्व-
रौ द्वौ च नैव मात्रा विधीयते ॥ स्वरे प्रतिस्वरं दद्याद्व्रे-
शीनां त्वा निदर्शनम् ॥१०८॥ चतुर्द्दशाक्षरं चादौ पुन-
श्चैकादशाक्षरम् ॥ पुनर्द्दशाक्षरं वाक्यमष्टाक्षरमतः प-
रम् ॥१०९॥ लक्षणैर्वा विहीनस्तु भुक्तमव्यञ्जनं यथा ॥
एवं वर्णाः प्रयोक्तव्याः शीघ्रं ते च निदर्शनम् ॥ ११० ॥
वसुसङ्ख्याक्षरं वाक्यं त्रिपदी वा चतुष्पदी ॥ सप्तता-
श्चासन्निह गायत्री अग्निन्दूतं, श्रुधी हवम् ॥ १११ ॥
उभौ सप्ताक्षरं वाक्यं पुनश्चैव नवाक्षरम् ॥ अष्टाक्षरं वि-

जानीयाद्यत्पुरूषं च निर्द्दिशेत् ॥११२॥ जनाशीति तु वर्णानि अथैताँश्च प्रकीर्त्तिताः ॥ एकाक्षरादिवाक्यानि द्वादशैतानि सङ्ख्यया॥११३॥ द्वादशाक्षरं प्रथमं पञ्चमे पञ्च सप्त वै ॥ षडक्षरं ततो वाक्यं पुनर्द्वादशकं स्मृतम् ॥११४॥ एकादशाक्षरम्प्राङ्गरन्ते च द्वादशाक्षरम् ॥ एवं वर्णाः प्रयोक्तव्या अथैतानिति दर्शनम् ॥११५॥ अष्टादशाक्षरं वाक्यं नाकपृष्ठे च पञ्चधा ॥ सप्तदशाक्षरं चैव वैश्वदेवी निदर्शनम् ॥ ११६ ॥ रौद्राध्यायोत्तरेणैव कण्डिकाशतकेन तु ॥ ततो वाक्यं प्रकुर्वीत ऋटचार्द्धे षोडशाक्षरम् ॥ ११७ ॥ अष्टादशाक्षरं वाक्यं पुनः षोडशकैः शुभैः ॥ एवं वर्णाः प्रयोक्तव्या अश्मन्नूर्जं विनिर्द्दिशेत् ॥ ११८ ॥ पुस्तके (१) प्रत्ययाऽधीतं नाधीतं गुरुसन्निधौ ॥ न भ्राजन्ते सभामध्ये जारगर्भा इव स्त्रियः ॥ ११९ ॥ एकः सर्वं न जानाति सर्वमेकं न विन्दति ॥ एवं मन्त्रा न शुद्ध्यन्ति पण्डिताः शुद्धभाविनः ॥ १२० ॥ (२) श्रुत्वा वेदविनाशं तु सम्यग्ब्रूयान्न वै बुधः ॥ आहूय तं विविक्ते वै तस्य धर्मो न हीयते ॥ १२१ ॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमा-

---

(१) प्रत्ययाधीतमिति 'ख' पुस्तकपाठश्च ॥

(२) अभभाजिनइति 'क' 'ग' पुस्तकयोः पाठः ।

नं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ १२२ ॥ लक्षणं न त्यजेद्धीमान्सम्प्रदायोऽन्यथा भवेत् ॥ लक्षणेन विना शिष्यः सम्प्रदायो विनाशवान् ॥ १२३ ॥ नासौ तत्फलमाप्नोति सम्यक्पाठमजानतः ॥ उत्तमो लक्षणज्ञानी लक्ष्यज्ञानी तु मध्यमः ॥ १२४ ॥ लक्ष्यलक्षणयोर्ज्ञानी तद्धि पात्रं (१) प्रचक्षते ॥ लक्षणेन विना वाणी निर्मलाऽपि न शुद्ध्यति ॥ १२५ ॥ प्रमदा रूपसम्पन्ना दरिद्रस्येव योषिता ॥ स्वरहीना यथा वाणी वस्त्रहीनास्तु योषितः ॥ १२६ ॥ एवं वर्णा न शोभन्ते प्राणहीनाः शरीरिणः ॥ वेदपाठी सदा सम्यग्विचार्य्यैवं पुनः पठेत् ॥ १२७ ॥ विश्वा रूपाण्यबोध्यग्निरेषोऽसीति तथाऽपरः ॥ केतुङ्कृण्वन्निति च ते षकारा मूर्द्धजाः स्मृताः ॥१२८॥ अग्नेरनीकं, व्युच्वा हि, विश्वे देवा, द्वितीयकम् ॥ उदग्ने चायमुत्तरा, नमो व्यन्याय, होत्यम् ॥१२९॥ देवस्वर्हि,र्यंदापोऽस्ति त्वामद्य, स्वस्ति न स्तथा ॥ मा नो मित्रो हि व्यन्तो चकारा ययुतास्तथा ॥ १३० ॥ इत्यमोघानन्दिनी शिक्षा समाप्ता ॥

(१) तद्धि पात्रं प्रशस्यते इति 'क' पुस्तकपाठः ॥

# अथ लघ्वमोघानन्दिनी शिक्षाऽऽ- रभ्यते ॥

पादादौ च पदादौ च सँय्योगावग्रहेषु च ॥ जः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः ॥ १ ॥ युक्तेन मनसा तद्वत्त्वा यामि तथाऽपरम् ॥ अनूका- शेन बाह्यं च तुरीयमनुया पदे ॥ २ ॥ पदादावप्यवि- च्छेदे सँय्योगान्ते च तिष्ठताम् ॥ वर्ज्जयित्वा रहौ या- नामीषत्स्पृष्टत्वमिष्यते ॥ ३॥ विद्द्यदी, न्यमिवाँश्च रोच- नास्य यथा भवेत् ॥ तथा पार्य्याय सूर्य्यश्च सुह्यन्त्वन्ये स- मूह्यवत् ॥ ४ ॥ उपसर्गपरो यस्तु पदादिरपि दृश्यते ॥ ईषत्स्पृष्टो यथा विद्यात्पदच्छेदात्परो भवेत् ॥ ५ ॥ वि- भाषया यकारस्य नित्यमाम्रेडितेऽपि च ॥ यत्र यत्रे- ति मा युद्धं तथा येति पदादपि ॥ ६ ॥ अथातऽउत्त- रो यः स्यात्तथा नेति पदात्परः ॥ भवन्त्यतेऽपि पूर्वंच तथा च स पदादपि ॥ ७ ॥ अथा वयमादित्यादावथो- येऽअस्य दृश्यते ॥ न यत्परो यथा च स्यात्स पदे तदु- दाहृताः ॥ ८ ॥ वो वां वा वै वि वौ पाठे उपसर्गात्परो लघुः ॥ अथ मा स न शब्देभ्यो विभाषाऽऽम्रेडिते यवौ ॥ ९ ॥ यद्वेव लक्षणं यस्य वकारस्यापि तद्भवेत् ।

यत्र यत्र विशेषः स्यात्तदिदानीं तु कथ्यते ॥ १० ॥ त्वदर्थवाचिनौ वो वां, वा वै यदि निपातजौ ॥ आदेशाश्च विकल्पार्था ईषत्स्पृष्टाश्च ते स्मृताः ॥ ११ ॥ देवो वः सविता या वां, व्वातो वेति तथा न तत् ॥ तव व्वायवृतस्पते तानऽ आवेति कीर्तिताः ॥ १२ ॥ यत्कृतं सूत्रकारेण तद्वत्स्यात्सम्प्रसारणम् ॥ तज्ज्ञेयं सर्वशाखासु न तु वाजसनेयिनाम् ॥ १३ ॥ लक्षणस्य विरोधेऽपि पाठैक्यं यदि दृश्यते ॥ तत्तथा प्रतिपत्तव्यँय्यज्ञायज्ञा वऽइत्यथ ॥ १४ ॥ अनुस्वारो द्विमात्रः स्याद्दवर्णव्यञ्जनोदये ॥ ह्रस्वाद्वा यदि वा दीर्घाद्देवानाꣳ॰ हृदयेभ्यः ॥ १५ ॥ स ꣳ स्रष्टा सि ꣳ ह्यसि सँय्योगे ह्रस्व इष्यते ॥ मध्यम ꣳ स्थायेति सँय्योगो न द्विरुच्यते ॥ १६ ॥ ज्ञात्वा वेदविनाशं तु सम्यग् ब्रूयान्न वै बुधः ॥ आहूय तं विविक्ते वै तस्य धर्मो न हीयते ॥ १७ ॥ (१) इति श्री लघ्वमोघानन्दिनी शिक्षा समाप्ता ॥

---

(१) इदं पद्यं प्राक् शिक्षायां लिखितं तथाऽपि सम्प्रदायविदोऽत्रापि लिखन्त्यतो मया लिखितम् ॥

# अथ माध्यन्दिनमहर्षिप्रणीता शिक्षाऽऽरभ्यते ॥

---

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ १ ॥ स्वराद्द्वित्वमवाप्नोति व्यञ्जनं व्यञ्जने परे ॥ हरौ न यद्यचः पूर्वौ निमित्तं व्यञ्जनस्य च ॥ २ ॥ इषे त्वोर्ज्जे त्वा ॥ स्वरपूर्वाः शषसहा अन्तस्थाश्च तथा यदि ॥ निमित्तभूता द्वित्वस्य स्पर्श एव न संशयः ॥३॥ अश्मान् ॥ स्पर्शपूर्वा यरलवाः स्पर्शपूर्वाः शरस्तथा ॥ व्यञ्जनञ्च ततः पूर्वं द्वेधाभावं न चाप्नुयात् ॥ ४ ॥ अयक्ष्माः ॥ विसर्गाच्च परः कादिर्व्यञ्जनात्किल पूर्वगः ॥ ह्रस्वपूर्वौ नङौ द्वित्वमापद्यते पदान्तगौ ॥ अपि स्वरतरावेव श्लिष्टौ भवति नान्यथा ॥ ५ ॥ विष्णोः कर्म्मः ॥ दध्यङ्ङृषिः ॥ अश्मन्नूर्ज्जम् ॥ अत्र येन निमित्तेन द्वित्वं व्यञ्जनमश्नुते ॥ द्वितीयस्य च प्रथमस्तुरीयस्य तृतीयकः ॥ ६ ॥ वाङ्क्ष्याम् ॥ स्ववर्गे च परे चैवापञ्चमे परतः स्थिते ॥ सवर्णे च यमे चैव अवर्णे न तथा शलि ॥ ७ ॥ तद्देवानाम् । ऋद्धिः । तन्नः । अग्निः । पितॄणाम् ॥

अत्र कवर्गीयखकारा निर्दिश्यन्ते ॥ आखरेष्ट्ठाः
आखुस्ते । २ । मयूखैः । ३ । द्यामा लेखीः ।
ततः खनेम । ५ । उखाङ्कृणोतु । ६ । उखाम्पर्ि
मि । ७ । खनत्ववट । ८ । दृधतूखे । ९
मित्त्रैतान्तऽउखाम् । १० । त्वङ्खाद् । ११
सुखादितान् । १२ । अभात्खा । १३ । गन्ध
अखनन् । १४ । आखिदते । १५ । प्रखिदते । १
विशिखाऽइव । १७ । श्रियै शिखा । १८ ।
स्याऽआखून् । १९ । ऋतूनामाखुः । २० । खः
व्वैश्वदेवः । २१ । नखेषु । २२ । मोरवा क
न्ती । २३ । उखायाः सदने खे । २४ । मधु ख
। २५ । खीषखम् । २६ । शङ्खधमम् । २७ । म
शिरो ऽसि । २८ । मखाय त्वा । २९ । अथ ग
तर्चानां निर्णयः ॥ इषे त्वा एदम् । अग्र्वस्तूपरः । समि
अग्नन् । सहस्रशीर्षा पुरुषः । तदेव । स्वाहा प्र
अस्मैष्वध्यायेषु न गलिता ऋचः ॥ १ ॥ द्वितीयेऽ
ये अग्ने व्रतपते इति प्रविष्टास्त्रयस्त्रिंशत् । २ ।
तीयेऽयमग्निः पुरीष्यऽइति प्रविष्टा द्वाषष्टिः ।
पञ्चमेऽग्ने व्रतपाऽ उरु व्विष्णोऽइति प्रविष्टे
कचत्वारिंशत् । ५ । षष्ठे प्रथमा ऋग्गलिता रेवती
ध्वमित्यतः परा देवस्य त्वान्तः पञ्चविंशत् । ६ । व्व

स्पतये त्वाकृतोऽसि आत्मने मे अग्ने नयायन्नो लु-
प्ते चतुश्चत्वारिंशत् । ७ । आदित्येभ्यस्त्वेत्यत्र कदा
चन सँव्वर्चसा देवा गातुविद ऽउदुत्यमवभृथ निचु-
म्पुण मिलिता अष्टपञ्चाशत् । ८ । देव सवितरित्यत्र
देवस्याहं एकोनचत्वारिंशत् । ९ । अपो देवा इत्यत्र
सोमस्य त्विषिरिमं देवा इति लुप्ते द्वात्रिंशत् । १० ।
युञ्जानः प्रथममित्यत्र युञ्जते देव सवितः पृथिव्याः
सधस्थाद्वसवस्त्वाच्छृन्दन्तु मिलिताऽअष्टसप्ततिः ।११।
दृशानो रुक्मऽ इत्यत्र हꣳसः शुचिषदक्रन्ददग्निर्दृशा-
नो रुक्मः समिधाग्निं सहरय्या पुनरूर्ज्जाऽ अयन्ते
भवतन्नऽअष्टोत्तरशतम् ॥ १२ ॥ मयि गृह्णामीत्यत्रा-
ग्निर्मूर्द्धाऽपाम्पृष्ठमह्नी द्यौर्व्विष्णोः कर्म्माणि चित्रं दे-
वानां त्रिपञ्चाशत् ॥ १३ ॥ ध्रुवक्षितिरित्यत्र शुक्रश्च
व्विश्वकर्म्मा त्वा द्वे नभश्चेषश्चेति पञ्चविंशतिः ॥ १४॥ अ-
ग्ने जातानित्यत्राग्नेर्मूर्द्धा त्वामग्ने पुष्कराद्ध्रुवो यज्ञ-
स्यायमिहायन्ते लोकं पृण ताऽअस्येन्द्रँव्विश्वा नवैता
लुप्यन्ते परमेष्ठी त्वा द्वे मिलिते चतुःपञ्चाशत् ॥ १५ ॥
नमस्ते इत्यत्र नीलग्रीवा द्वितीया नमोऽस्तु द्वे मिलिता-
स्त्रयस्त्रिषष्टिः ॥ १६ ॥ अश्मन्नूर्ज्जमित्यत्र हिमस्य त्वा-

व्वाजस्य नु देवस्य त्वा यास्ते याव्ऽउद्बुध्यस्व येन व्व
सि व्विनस्वँय्यविष्ठेत्यष्टमिलिता एकोनसप्ततिः । १८
स्वाद्दीन्त्वेत्यत्र व्वायोः पूतः कुविदङ्गेति द्वे त्रिनवतिः ।१८
च्चत्रस्य योनिरित्यत्र समुद्रे ते उताप: पुत्रमिव पितर
निषसाद यदि जाग्रद्यदापो यदि दिवेति यद्ग्रामे क
मिच्छियानो यत् सुरामं नवैकाशीतिः ॥ २० ॥ इमं
इत्यत्र तन्वा शन्नो व्वाजेवाजेऽवत होतायक्षदिन्द्रस्य
ऋषभस्य सरस्वतीश्मेपस्येति प्रविष्टाः सप्तपञ्चाशत् ॥२१
तेजोऽसीत्यत्र तत्सवितुर्व्विश्वो देवस्य पृथिव्यै स्वाहा म
धवे स्वाहा व्वाजाय स्वाहाऽसवे स्वाहेति प्रविष्टाऽएक
विंशतिः ॥२२॥ हिरण्यगर्भऽइत्यत्र कः स्वित्सूर्य्यऽएका
की का स्विद्द्यौरासीत्प्रजापते न सप्तपञ्चाशत् ॥२३
शादन्द्भिरित्यत्र हिरण्यगर्भः सँय्यः प्राणतोऽग्ने
त्वं चतुश्चत्वारिंशत् ॥ २५ ॥ अग्निश्चेत्यत्र व्वैश्वा
नरो नः पञ्चविंशत् ॥ २६ ॥ समास्त्वेत्यत्र उ
द्वयं चतुश्चत्वारिंशत् ॥ २७ ॥ होता यक्षदित्यत्र दे
वा दैव्या होतारा शुचिमुष्णिहानन्तरं सर्वं लुप्त
अन्तस्त्रिपञ्चाशत् ॥ २८ ॥ देव सवितरित्यत्र तत्सवि
तुर्विंशत् ॥ ३० ॥ अश्वाजरासऽइत्यत्र युदवा हि अय
मिह मूर्द्धानन्दिवऽऋदुरयं विश्वेऽअद्येन्द्रवायूऽइमे यज्ञं
देवानां गावऽउप दैव्यावद्ध्वर्यूऽअदब्धेभिः सवितः सप्त

धीतिः । ३३ । यज्जाग्रतऽइत्यत्राकृष्णेन सप्तपञ्चाश-
त् । ३४ । अपेतऽइत्यत्राश्वत्थे वः सुमित्रिया नऽउद्वय-
मग्नऽआयूꣳषीत्यष्टादश । ३५ । ऋचँवाचमित्यत्र भू-
र्भुवः कया नः कस्त्वा स्योना पृथिव्यापोहिष्ठेति त्रि-
र्नमस्ते हरसे सुमित्रिया नोऽभीषुणो दृते दृꣳहमेति
त्रयोदश । ३६ । देवस्य त्वेत्यत्र देवी द्यावापृथिवीन्द्र-
स्यौजोऽश्वस्य त्वेयत्यग्रे हृदे त्वा युञ्जते मनः प्रैतु म-
खस्य शिरस्त्रयोदश । ३७ । द्वितीयदेवस्य त्वेत्यत्र सु-
मित्रिया न ऽउद्वयमेधो ऽसीड ऽएह्यदित्यै रास्नासीन्द्रा-
यत्वा षड्‌विंशतिः । ३८ । ईशा वास्यमित्यत्रान्धन्त-
मोऽन्यदेवासम्भूतिमित्रितास्त्रयोऽग्नेनय त्रयोदश ।
४० । एवं चतुष्षष्ट्युत्तरशतं लोपाः । एकादशोत्तर
मष्टादशशतैः सहेति ॥ इति प्रथमा माध्यन्दिनीयशि-
क्षा समाप्ता ॥

---

# अथ द्वितीया लघुमाध्यन्दिनी शिक्षा प्रारभ्यते ॥

---

अथ शिक्षां प्रवक्ष्यामि माध्यन्दिनमतँय्यथा
कारस्य खकारः स्याट्टुकयोगे तु नो भवेत् ॥
षे लक्ष्यं कृष्णाऽयता समुद्रः प्रत्युदाहृतिः ॥
विद्यमानस्य ह्यसँयुक्तस्य यस्य च ॥ २ ॥ आदेः
जकारः स्याद्युक्तः सन्नुहरणेन तु ॥ यज्ञेन यज्ञं
मयूरे प्रत्युदाहृतिः ॥ ३ तस्माद्यज्ञात्सर्वहुत
मस्माद्यन्तथैव च ॥ रेफेणाथ हकारेण युक्तस्य
या भवेत् ॥ ४ ॥ सूर्यो बाह्यन्तु वै लक्ष्यं भ्राष्ट्र
त्युदाहृतिः ॥ यकारकोरयुक्तस्य जकारः सर्वथ
त् ॥ ५ ॥ सहस्या तथा व्यूह्या चोपसर्गपरः
उपयज्ञम्भ्रानुपाणामपि यन्तीत्युदाहृतिः ॥ ६ ॥
वंकारो विज्ञेयः पदादौ पठितो भवेत् ॥ व्वि
दाहृतिर्ज्ञेया सविताल्लघुः स्मृतः ॥ ७ ॥
वै लघुतरस्तत्र व्यायष्टतस्पते ॥ उपसर्गपरो यव
कारो लघुर्मतः ॥ ८ ॥ वो वां वा वै मन्त्रपाठे
गुरवः पदे ॥ प्रवायुमच्छा बृहती व्रातो वेति
नम् ॥ ९ ॥ रेफो रेफत्वमाप्नोति भ्राष्ट्रेषु परे

ददर्श वर्षौऽअहीच्च सँय्योगे नैव कारयेत् ॥ १० ॥
व्यञ्जमन्वष्योयान्नहं दा तत्र तावदुदाहृतिः ॥ लकारो
ऽपि च सावर्ण्याद्देकारसदृशो भवेत् ॥११॥ शतवल्शा-
च वल्हा च तत्र तावदुदाहृतिः ॥ अनुस्वारो यत्र कुत्र
ठं०कारो भवति ध्रुवम् ॥ १२ ॥ ह्रस्वो दीर्घो गुरुश्चेति
त्रिविधः परिकीर्त्तितः ॥ ह्रस्वात्परो भवेद्दीर्घो हठं०स
ऽइति दर्शनम् ॥१३ ॥ दीर्घात्परो भवेद्ध्रस्वो मा ए॒ सं-
श्यऽइति दर्शनम् ॥ गुरौ परे ह्यनुस्वारो गुरुरेव हि स
स्मृतः ॥ १४ ॥ सि ए॒ ह्यसीति तत्र तावट्टकारे दी-
र्घऽएव सः ॥ देवाना ए॒ हृदये तद्वत्स्वराणां तथा
स्रुके ॥ १५ ॥ अथायोगवाहानाह ॥ अवर्णाच्च ऋका-
राच्च विसर्गः कण्ठ्य एव सः ॥ इवर्णाच्च तथोवर्णात्तथा
चैकारपूर्वकः ॥१६॥ औकारपूर्वकश्चैव तालव्यो भवति-
ध्रुवम् ॥ एकाराच्च कण्ठतालुर्विसर्गो भवति ध्रुव-
म् ॥ १७ ॥ कण्ठोष्ठ्यस्तु तथौकाराद्विसर्गो भवति ध्रु-
वम् ॥ देवो वः सविता चात्र हकारसदृशो भवेत् ॥
१८ ॥ देवीस्तिस्रो विसर्गस्तु हिकारसदृशो भवेत् ॥
आखुस्ते पशुरित्यादौ हुकारसदृशो भवेत् ॥ १६ ॥
विसर्गश्चाग्नेरित्यादौ हेकारसदृशो भवेत् ॥ विसर्गा
बाह्वोरित्यादौ होकारसदृशो भवेत् ॥ २० ॥ अथ
खैर्दन्तैरित्यादौ हिकारसदृशो भवेत् ॥ विसर्गा द्यौ-

कथँ व्वदेत् ॥ ९ ॥ अथ प्रथमतो वर्णसञ्ज्ञाऽधिक्रियते मया ॥ यया विना न सिद्ध्यन्ति व्यवहारा नृणामिह ॥ १० ॥ एकविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ॥ द्विगुणानि व्यञ्जनानि ह्येतावान्वर्णसङ्ग्रहः ॥ ११ ॥ ऋटपर्य्यन्ताः स्वरास्तेषा लृकारो ह्रस्वएव च ॥ सन्ध्यचराण्यह्रस्वानि ते चैवमेकविंशतिः ॥ १२ ॥ ककारादिमकारान्ताः स्पर्शाः स्युः पञ्चविंशतिः ॥ चतस्रो यादयोऽन्तस्था ऊष्माणः शषसाः (१) सहाः ॥ १३ स्पर्शानां पञ्चमैर्य्योगे चत्त्वारश्च यमाः स्मृताः ॥ अनुस्वारो विसर्गश्च जिह्वामूलीयऽएव च ॥ १४ ॥ उपध्मानी इति च द्विस्पृष्टश्च तथाऽपरः ॥ द्विस्पृष्टता च विज्ञेया डढयोः स्वरमध्ययोः ॥ १५ ॥ पदकाले वियुज्येत द्विस्पृष्टो न भवेत्तदा ॥ सव्यञ्जनः सानुस्वारः शुद्धो वाऽपि स्वरोऽक्षरम् ॥ १६ ॥ चतुर्णां पञ्चमैर्य्योगे उत्पद्यन्ते यमाश्च ये ॥ कुँ खुँ गुँ घुँ इति च ते चत्वारोनाच पञ्चमः ॥ १७ ॥ वर्गाणां प्रथमौ द्वौ द्वावूष्माणश्च हवर्जिताः ॥ जित्सञ्ज्ञा भवन्त्येते शेषा धिसञ्ज्ञकाः स्मृताः ॥ १८ ॥ शषसा मुत्समाख्याता अवर्णः कण्ठ्यसञ्ज्ञकः ॥ सिम्सञ्ज्ञका ऋटपर्य्यन्ता भावी स्यात्काराद्यवर्ज्जितः ॥ १९ ॥ अन्त्याद्वर्णाद्भवेद्वर्णः पूर्वः स उ-

पधाभिधः ॥ एताः सञ्ज्ञा बुधैर्ज्ञेया व्यवहारप्रसिद्धये ॥ २० ॥ ललहजिह्वामूलभवोपध्मानीयस्तथैव च ॥ नासिक्याश्च तथा चास्मिन्वर्णा वर्ज्याः सदैव हि ॥ २१ ॥ एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ॥ त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रिकम् ॥ २२ ॥ तदर्द्धमणु तस्यार्द्धं परमाण्वभिधीयते ॥ वर्णग्रहे सवर्णोऽपि सङ्ख्या स्पर्शेषु कीर्त्तिता ॥ २३ ॥ अथ वर्णसमाम्नाये स्थानं करणसँय्युतम् ॥ आत्मशक्त्या प्रवक्ष्येऽहं तत्तल्लक्ष्यमघं बुधैः ॥ २४ ॥ अष्टौ स्थानानि वर्णानामुरः कण्ठशिरस्तथा ॥ जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ २५ ॥ हकारः पञ्चमैर्युक्तो योऽन्तस्थाभिरथाऽपि वा ॥ औरस्यं तं विदुः प्राज्ञाः कण्ठ्यं शुद्धं प्रचक्षते ॥ २६ ॥ ऋवर्णोऽथ कवर्गश्च जिह्वामूलीय एव च ॥ जिह्वामूले भवन्त्येषां जिह्वामूलं चकारणम् ॥ २७ ॥ इवर्णोऽथ चवर्गश्च एऐकारौ यशैः सह ॥ तालुस्थाना भवन्त्येषां जिह्वामध्यं तु कारणम् ॥ २८ ॥ षकारोऽथ टवर्गश्च मूर्द्धन्याः परिकीर्त्तिताः ॥ जिह्वायाः प्रतिवेष्टाग्रमेतेषां कारणं स्मृतम् ॥ २९ ॥ लृलसिताः स्मृता दन्त्या जिह्वाग्रकरणा हि ते ॥ रेफश्च दन्तमूलोत्थो जिह्वाग्रेण विधीयते ॥ ३० ॥ उवर्णो-

स्मृता वर्णा उपध्मानीय एव च ॥ ३१ ॥ समान
करणा नासिक्यौष्ठ्याः प्रकीर्त्तिताः ॥ वकार ओ
तौ दन्ताग्रकरणः स्मृतः ॥ ३२ ॥ अवर्णस्य
ह्कारस्यापि केवलः ॥ कण्ठ्या वर्णाः स्मृता ह्यो
नुमध्यं तु कारणम् ॥ ३३ ॥ यमानुस्वारनासिक्य
सामूलभवा दृशा ॥ मुखनासिकाकरणोऽनुना
ति स्मृतः ॥ ३४ ॥ पूर्वा मात्रा तु कण्ठ्यस्य एका
रयोर्भवेत् ॥ तालव्यस्य तथौष्ठ्यस्य परा प्रोक्ता य
मम् ॥ ३५ ॥ ऐकारौकारयोश्चैवं तत्त्वं ज्ञेयं
णैः ॥ एऐ तु कण्ठ्यतालव्यौ ओऔ कण्ठोष्ठजौ च
३६ ॥ एतद्वर्णसमाम्नायस्थानं करणसंयुतम् ॥
व्यं तन्मया प्रोक्तं शास्त्रतत्त्वार्थदर्शनम् ॥ ३७ ॥
दास्य भवेत्स्थानं करणं वा विशेषणम् ॥ सवर्णत्वं
ङ्ग्राह्य आस्ययत्नस्तु भिद्यते ॥ ३८ ॥ संवृतं
तद्वदस्पृष्टं स्पृष्टमेव च ॥ ईषत्स्पृष्टं चार्द्धस्पृष्टमा
स्तु षड्विधः ॥ ३९ ॥ अकारः संवृतो ज्ञेयो वि
तरे स्वराः ॥ अस्पृष्टाख्यप्रयत्नाश्च स्वराः सर्व्वे
हि ॥ ४० ॥ स्पृष्टाः स्पर्शास्तु विज्ञेया अन्तस्था
त्स्पृशः ॥ अर्द्धस्पृष्टाश्च विज्ञेया ऊष्माणो वर्णवे
४१ ॥ ऋलोर्मध्ये भवत्यर्द्धमात्रा रेफलकारयो

मात्रस्यैकमात्रस्य सँवृतादिप्रयत्नतः ॥ भिन्नस्याप्यस्तु सावर्ण्यं तदर्थमिदमुच्यते ॥ ४३ ॥ अथातोऽवरतो वच्मि चर्चां पूर्वपराङ्गयोः ॥ स्वारप्रयोजना चासौ वेदितव्या विचक्षणैः ॥ ४४ ॥ सँय्योगस्यादिभूतो यः स पूर्व्वाङ्गं भवेद्यथा ॥ अश्वः शश्वसँय्योगे शः पूर्व्वाङ्गः शवोऽन्यतः ॥ ४५ ॥ यमश्च पूर्वस्याङ्गं स्याच्चकारात्पूर्व्वसंश्रुतः ॥ रुक्मः पूर्वस्य कयमावुत्तरस्य तु मः स्मृतः ॥४६॥ सँय्योगादिपरद्वित्वे पूर्व्वाङ्गं क्रमजं यथा ॥ पार्श्वं रशौ तु पूर्वस्य परस्य शवयात्मकम् ॥ ४७ ॥ क्रमजाच्चोत्तरं स्पर्शे परे पूर्व्वाङ्गकँय्यथा ॥ पार्ष्ण्यां पूर्व्वस्य रषणाः परस्याङ्गं णयात्मकम् ॥ ४८ ॥ यद्व्यञ्जनं च यस्याङ्गं तत्तेन सस्वरं भवेत् ॥ एतदर्थमिदं प्रोक्तं स्वारसन्देहभेदकम् ॥ ४९ ॥ अनुस्वारो विसर्गश्च नासिक्योऽथ यमास्तथा ॥ जिह्वामूलमुपध्मा च नवैते स्युः पराश्रयाः ॥ ५० सँय्योगवाह्या एवैते निजस्वरविवर्जिताः ॥ पूर्व्वस्याङ्गं भवन्त्येते स्वर एतेषु पूर्ववत् ॥ ५१ ॥ स्वरभक्तिश्च पूर्व्वाङ्गं देवबर्हिरुदाहृतिः ॥ इकारे च तथोकाकारे तां यत्नेन विवर्जयेत् ॥ ५२ ॥ रेफो वाऽथ लकारो वा यत्रोष्मणि स्वरोदये ॥ स्वरभक्तिर्भवेत्तत्र पूर्व्वमाक्रम्य पठ्यते ॥ ५३ ॥ ऊष्मणामुपरिस्थस्तु रेफो याति रेवर्णताम् ॥ रेफत्वं पुनरायाति यद्यूष्माणोऽन्य-

सँय्युताः ॥ ५४ ॥ ऊष्मणां स्वरभक्तिस्तु द्विर्भावं बाधते यथा ॥ व्वर्षो व्वर्षीयसि ह्वार्षोच्छ्रतवल्शोऽपि सिध्यति ॥ ५५ अष्टौ स्वरान्प्रवक्ष्यामि तेषामेव च लक्षणम् ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टस्तदनन्तरम् ॥ ५६ ॥ तैरोव्यञ्जनऽएवाथ तैरोविराम एव च ॥ पादवृत्तस्तस्तत्त्वद्वत्ताथाभाव्यस्तथाऽष्टमः ॥ ५७ ॥ एकपदे नीपूर्वस्तु सयवो जात्यइष्यते ॥ अपूर्व्वोऽपि परस्तद्वद्वान्यं कन्या स्वरित्यपि ॥ ५८ ॥ सप्तोदात्तादयो ज्ञेया परेऽभिनिहितादयः ॥ त्रयो नीचपरास्तत्र प्रश्लिष्टान्तं निदर्शनम् ॥ ५६ ॥ एओ आभ्यामुदात्ताभ्यामकारो नीच एव च ॥ लुप्यते सन्धिकार्य्ये यत्तं चाभिनिहितं विदुः ॥ ६० ॥ तेऽप्सरसां च तेऽवन्तु व्वेदोऽसीति तुथोऽस्यपि ॥ इउ वर्णावुदात्तौ चेदनुदात्तस्वरोदयौ ॥ ६१ ॥ यवाभ्यां चैव सँयुक्तौ तदा क्षैप्रः स्वरो भवेत् ॥ व्याव्यर्व्वं स्त्र्यम्बकँय्यद्द्वन्नो योजान्विन्द्रेति च ॥ ६२ ॥ उच्चः पूर्व्वः परो नीच इकारोऽन्योऽन्यसङ्गतः ॥ प्रश्लिष्टः सस्वरो ज्ञेयः स्रुचीवाभीन्धतांय्यथा ॥ ६३ ॥ उदात्तपूर्व्वो यत्र स्यान्नीचो व्यञ्जनसँय्युतः ॥ स तैरोव्यञ्जनइति स्वरो भवति तद्यथा ॥ ६४ ॥ इडे रन्ते हव्ये काम्ये चन्द्रे ज्योते निदर्शनम् ॥ उदात्तावग्रहो यत्र स तु तैरोविरामकः ॥ ६५ ॥ स्वरो ज्ञेयः पदेऽन्यत्र तैरोव्य-

ञ्जनएव तु ॥ यथा गोपताविति गोपतौ यज्ञपतिस्त-
था ॥ ६६ ॥ स्वरयोरन्तरे यत्र विवृत्तिर्यदि दृश्यते ॥
सा पादवृत्त इत्याख्यः काइँमरे निदर्शनम् ॥ ६७ ॥ उ-
दात्तादिरुदात्तान्तो नीचोऽवग्रह एव च ॥ ताथाभा-
व्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् ॥ ६८ ॥ माध्यन्दि-
नविरोधी स्यात्ताथाभाव्यस्तु यः स्वरः ॥ भिन्नो यतो-
ऽत्र दृश्येते तावुदात्तानुदात्तकौ ॥ ६९ ॥ तस्मान्माध्य-
न्दिनीयानां पदे कम्पो विधीयते ॥ तथोक्तमौज्जिहा-
यनकैर्माध्यन्दिनानुसारिभिः ७० ॥ अवग्रहो यदा नी-
चप्रोच्चयोर्मध्यतः क्वचित् ॥ तथाभाव्यो भवेत्कम्पस्तनू-
नप्त्रे निदर्शनम् ॥ ७१ ॥ जात्याभिनिहितक्षैप्रप्रश्लिष्टाः
स्वरिता इमे ॥ नीचपूर्वो यदा त्वेते तिर्य्यक्स्वारस्तदा
भवेत् ॥ ७२ ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च च-
तुर्थकः ॥ एते स्वराः प्रकम्पन्ते दृष्ट्वोदात्तं पुरः स्थित-
म् ॥ ७३ ॥ यथा व्यक्तः पस्त्या स्वा युध्योऽस्माकम्त-
थाऽपरम् ॥ परमेष्ठ्यभिधीतोऽभीममित्यादि निदर्श-
नम् ॥ ७४ ॥ नीचपूर्वोदात्तपरः स्वरोऽसौ प्रणिहन्यते ॥
अन्यथा नीचएव स्यात्स्वर्गं घर्म्मादिकँय्यथा ॥ ७५ ॥
स्वरितादनुदात्तं यत्तत्सर्व्वं प्रचयाह्वयम् ॥ स्यादुदात्त-
मयं चैव त्वामग्नेत्यादिकँय्यथा ॥ ७६ ॥ तिर्य्यक्स्थान-
गते ह्रस्वेऽनुदात्तो दृश्यतेऽपरः ॥ प्रचितं तँव्विजानी-
यादुदात्तं स्वरमाप्नुयात् ॥ ७७ ॥ जात्यं कृत्वा ततः

पश्चात्प्रचितो दृश्यते यदि ॥ तन्तु तत्रैव निर्वर्त्य पश्चा-
द्ध्रस्वं प्रचालयेत् ॥ ७८ ॥ नोदात्तस्वरितात्पूर्व्वं प्रचितं
स्यादुदात्तवत् ॥ ज्ञात्वानुदात्तमथ तमुदात्तस्वरमाच-
रेत् ॥ ७९ ॥ यथा स्यात्स्वरितात्स्वारो व्वाजे वाजेऽव-
तेति च ॥ स्वरितोदये सेनानी ग्रामण्यौ, सहस्राय
च॥ ८० ॥ तैरोव्यञ्जनवज्ज्ञेयो जात्योऽभिनिहितः प्र-
श्चः ॥ यथा धान्यं कन्या इव व्वेदोऽसीति तुथोऽस्य-
पि ॥ ८१ ॥ व्वत्सरोऽसि भवेत्तद्वद्वाज्ज्यर्व्वंश्च स्रुचीव
च ॥ उदात्तस्वरितपरप्रचितस्यापि नित्यशः ॥ ८२ ॥
भवेन्नीचतरादेशो वैय्याकरणसम्मतः ॥ स्वरिताद्वा-
ऽनुदात्ताद्वा उदात्तो दृश्यते यदि ॥ ८३॥ शून्यं प्रचाल-
येद्ध्रस्वं स्वरितात्स्वरितेऽपि च ॥ शून्यं प्रचालयेद्ध्रस्वं य-
दुक्तं केन चित्क्वचित् ॥ ८४ ॥ तत्कातीयविरोधी स्या-
त्सम्प्रदायविरोधकृत् ॥ उक्तं च याज्ञवल्क्येन मन्त्रे वा-
जसनेयके ॥ ८५ ॥ स्वर उच्चः स्वरो नीचः स्वरः स्वरित-
एव च ॥ स्वरप्रधाने त्रैस्वर्य्यँ व्यञ्जनं तेन सस्वरम् ॥
८६ ॥ मणिवद्व्यञ्जनान्याहुः सूत्रवत्स्वर इष्यते ॥ व्य-
ञ्जनान्यनुवर्त्तन्ते यत्र तिष्ठति सस्वरः ॥ ८७ ॥ वर्णेषू-
च्चार्य्यमाणेषु विकाराः स्युस्त्रयस्तनोः ॥ आयाममार्द्दवौ
चोभौ तृतीयश्चाभिघातकः ॥ ८८ ॥ गात्रस्योच्चमध-
स्तिर्य्यग्गमनं स्याद्यतः क्रमात् ॥ तत्रोदात्तेऽनुदात्ते च

स्वरिते च प्रकीर्त्तितम् ॥ ८९ ॥ उभयवांश्च स्वरित
एकीभावेऽन्ययोर्भवेत् ॥ यथा पत्येव चम्वीव नक्षाऽ-
स्त्र्यत स्त्यवे ॥ ९० ॥ अथोदात्तोनुदात्तस्य स्वरित-
स्यापि सङ्गमे ॥ उदात्त एको भवति षट् प्रकारः स ना-
न्यथा ॥ ९१ ॥ द्वयोस्तु स्वरयोस्सन्धावेकीभावो य-
दा भवेत् ॥ तदा नीचोऽप्युदात्तस्य वशं गच्छति सा-
न्वयः ॥ ९२ ॥ उदात्तयोरथैकत्वे भवेदुदात्तएव च ॥
स पुरस्तात्परस्ताद्वा यथा स्यात्प्रार्पयत्विति ॥ ९३ ॥
एमे तन्नैजति परं त्रिष्श्वाभ्यस्त्वा पुनस्तथा ॥ नाभिर-
स्याथ मेऽङ्गानि जयन्तन्त्वां तथैव च ॥ ९४ ॥ पाभिनो-
ऽति देवाऽगात्पूर्व्वोऽगाद्वर्हिराऽसदत् ॥ आऽरुहा
माऽदधुरास्याद्वियादेवं निदर्शनम् ॥ ९५ ॥ अस्याप-
वादरूपं यदुदाहरणमुच्यते ॥ आख्यातानां प्रयोगेषु
पूर्वं पदमुपस्थितम् ॥ ९६ ॥ षोडशाक्षरपर्यन्तं तद्यो-
गि स्वरमुद्धरेत् ॥ याँ २ ॥ऽ आऽवहो यदावद्न्यो नः
पिता तथाऽपरम् ॥ ९७ ॥ यत्पुरुषँ व्यदधुश्च विद्यादे-
वं निदर्शनम् ॥ जात्यपूर्वोदात्तपरो ह्युक्षो भवति नि-
त्यशः ॥ ९८ ॥ यथाऽद्धूरयेऽवसेऽपि स्याक् ज्ञातव्यं स्व-
रवेदिभिः ॥ स्त्रूव्योग्र स्वरितपरोदात्तपूर्वो यथा भवे-
त् ॥ ९९ ॥ स्वरितोदात्तयोः सन्धावुदात्तो बलवा-
न्स्मृतः ॥ हित्वाऽभिनिहितश्चैप्रश्लिष्टांस्तौनिमान्स्वरा-

न् ॥ १०० ॥ वीड्वग्यानुदात्तपूर्वोदात्तपरो यथा भ-
वेत् ॥ स्वव्यीय स्वरितपरोदात्तपूर्व्वः पदे यथा ॥
१०१ ॥ स्वर्वतीक्ष्णोऽभिनिहितः प्रश्लिष्टस्तदनन्तरम् ॥
ततो मृदुतरौ स्वारौ जात्यक्षैप्रावुभौ स्मृतौ ॥ १०२ ॥
ततो मृदुतरः स्वारस्तैरोव्यञ्जन उच्यते ॥ पादवृत्तो
मृदुतरस्त्वेतत्स्वारबलाबलम् ॥ १०३॥ द्वयोस्तु स्वरयो-
स्सन्धौ स्वरितः स्यात्परो यदि ॥ उदात्तस्यान्तस्थीभावे
प्रोच्यते त्र्यम्बकँय्यथा ॥ १०४ ॥ योजान्न्विन्द्र वीड्वु
ङ्गोदृन्नः सर्प्पिस्तथाऽपरः ॥ नियमः स्वरसन्धेस्तु समाप्तो
विदुषां प्रियः ॥१०५॥ अथाऽतः संस्कारविधिः कथ्यते यो
मयाऽधुना ॥ लोपागमौ विकारश्च प्रकृत्या भवनं त-
था ॥ १०६ ॥ ज्ञातव्यो निपुणैरेवं संस्कारोऽसौ चतु-
र्विधः ॥ स्वरयोर्वा हलोर्वाऽपि स्वरव्यञ्जनयोस्तत ॥१०७॥
ते नोऽवज्ज्वय देवासऽएदमापोऽअपान्नपात् ॥ देवान-
ऽआयुः प्र्राङ्क्ष् सोमस्त्वन्नश्चिकित्वान्वँय्यथा ॥ १०८ ॥
प्रथमात्तु हकारोऽयं तच्चतुर्थत्वमाप्नुयात् ॥ उद्धर्षयावा-
द्धढ्ढ्यान्नि घ्नमेवं निदर्शनम् ॥ १०९ ॥ आद्यः स्व-
रे तृतीयत्वं घोषवत्सु त्वपञ्चमः ॥ अघोषे प्रथमत्वं वा
उद्देनं युङ्ग्मे अपि ॥ ११० ॥ पदान्ताः प्रथमा वर्णाः
परतः स्वरघोषिणः ॥ भजन्ते स्वतृतीयत्वं स्वोत्तमत्वं
यथोत्तमे ॥ १११ ॥ आद्योत्तमाः पदान्तीयास्त्ववर्गं प-

नम् ॥ ११२ ॥ कखयोः परयोर्न्नित्यं पफयोः परयोर-
पि ॥ विसर्गस्य यदुक्तन्तल्लक्षणान्नात्र सिद्ध्यति ॥ ११३ ॥
मयि वः कामधरणं ततः खनेम चाऽथ्यथ ॥ अग्निः
पशुर्य्याः फलिनीर्विद्यादेवं निदर्शनम् ॥ ११४ ॥ अ-
श्वनिष्पारसमरीर्द्यौऽष्पिता च वसुष्कविः ॥ आविष्क-
णुष्वेव तथा पर्यो वो व्वसतिष्कता ॥ ११५ ॥ एव मा-
दौ विसर्गस्य षत्वमिच्छन्ति सूरयः ॥ पूर्वोक्तस्यापवा-
दोऽयं ज्ञातव्यः कृतबुद्धिभिः ॥ ११६ ॥ कवर्ग्योपधः स-
कारः स्याद्ग्राव्युधः ष एव च ॥ अघोषे घोषवति तु लो-
पो रेफो यथाक्रमम् ॥ ११७ ॥ इडस्पदेडायास्पदं
ज्योतिष्कृदिष्कृतिस्तथा ॥ तत्र ऽइन्द्रोऽयज्ञा मा
हविर्होतन्निदर्शनम् ॥ ११८ ॥ आव्युषः षत्वमेति व-
र्जयित्वा कृपीस्कृधिम् ॥ प्रत्ययस्य सवर्णत्वं यातीति
शाकटायनः ॥ ११९ ॥ अविकारं च शाकल्यो मन्यते
शषसेषु च ॥ आशुः शिशानो वृषभो देवोवः सवि-
ता तथा ॥ १२० ॥ अदितिः षोडशेत्यादिर्विज्ञेयोदा-
हृतिर्विदा ॥ पदान्ताः प्रथमा वर्णाः शषसेषु परेषु
तान् ॥ १२१ ॥ शौनको द्वितीयानिच्छेत्प्रकृत्या शा-
कटायनः ॥ असमानस्थलस्थाश्चेच्छौनकोऽपि वदेत्तदा ॥
१२२ ॥ सम्यक्स्ववन्ती वट्सूर्य्यानुष्टुप्शारद्यथापरम् ॥

तत्सवितुश्च तत्सत्यन्द्वितीयं नात्र कर्हिचित् ॥ १२३ ॥ असस्थानस्थितत्वाच्च तैत्ताणां तु न तन्मतम् ॥ पदान्तस्य तवर्गस्य चवर्गे परतः स्थिते ॥ १२४ ॥ चवर्गः स्यात्त-कारस्य चछयोः शागमः स्मृतः ॥ शकारश्छत्वमाप्नोति तवर्गात्स्पर्शवर्ज्जितः ॥ १२५ ॥ तच्चक्षुर्जिह्वानाश्च तच्छ्रेयमतः परम् ॥ बृहच्छोचा युविष्ठ्येति वाजाञ्ज-यत्त्वशापरन् ॥ १२६ ॥ तकारस्य पदान्तस्य शकारे परतः स्थिते ॥ चवर्गपञ्चमत्वं स्यान्नच्छादेशे तु शाग-मः ॥ १२७ ॥ स्वधावाञ्छुक्रः पिशङ्गाञ्छिशिरायेति वै तथा ॥ आदित्याञ्छ्मश्रुभिर्न्नात्र छत्वं स्यात्स्पर्शश-ङ्कया ॥ १२८ ॥ दधन्वान्स्वरान्यश्चारे नकारो लो-पमाप्नुयात् ॥ पीवोऽन्नान् रयिवृधे परे वाऽपि तथा पुनः ॥ १२९ ॥ स्वराणामानुनासिक्यं प्रतिजानन्ति सर्वतः ॥ वर्जयित्वा तमाकारं(१) नकारो यत्र लुप्यते ॥ १३० ॥ उपधारञ्जनं कुर्यात्स्वरे विकरणे सति ॥ लो-पे प्रकृतिभावे च नोपधारञ्जनं भवेत् ॥ १३१ ॥ प-दान्तस्थो नकारो यः सोऽनुनासिकपूर्वकः ॥ लकारे लत्वमाप्नोति शसत्वं चतकारयोः ॥ १३२ ॥ यथाऽ-स्मिँल्लोके त्रीँल्लोकान्हीँश्च सर्वानप्युत ॥ गवयाँस्त्वष्टे प-शूँस्ताँश्चक्रे चैव निदर्शनम् ॥ १३३ ॥ स्पर्शे परे नका-

(१) यत्र लोपो विधीयते । इति 'ग'पुस्तकपाठः ॥

रस्य विकारो नोपलभ्यते ॥ यतौ विहाय तत्राऽपि प्र-
कृत्या भवनं क्वचित् ॥ १३४ ॥ यथाऽस्मिन्गोष्ठेऽक्रन्क-
र्म्म देवान्दिवमथापरम् ॥ पशून्पाहीति जानीयान्न-
कारस्यैकरूपताम् ॥ १३५ ॥ धामन्ते पतयिष्णवर्व्वन्
शत्रून्त्वाढि तथाऽपरम् ॥ मित्र मह्यश्विविकित्वान्त्वम्पूषन्त्व
व्रते तथा ॥ १३६ ॥ मदिन्तमानां च मधुन्तमानां
तद्विते तमे ॥ निर्ज्जगन्वान्तमसि च न विकारो भवे-
दिह ॥ १३७ ॥ एते निपातसिद्धत्वान्न विकारमवा-
प्नुयुः ॥ नृन्पकारे विसर्गत्वमुपधारञ्जनं लभेत् ॥
१३८ ॥ मन्त्रॄन्क्रतून्वनस्पतीन्परिधीँश्च चतुर्थकम् ॥ स्व-
रे रेफत्वमाप्नोति नासिक्यं चोपधा तथा ॥ १३९ ॥ अ-
नुस्वारस्य रोष्मसु मकारस्येति यो विधिः ॥ पदयो-
रन्तरे सः स्यात्पदमध्ये तु नस्य च ॥ १४० ॥ यथाऽपा-
ꣳ रसं चैव त्वाꣳ शुष्मन्तऽएव च ॥ यजूꣳषि तपूꣳषि-
ऊर्ꣳ हीति निर्दर्शनम् ॥ १४१ ॥ पदान्तीयमकारस्य
त्वन्तस्थाः परतो यदि ॥ नासिक्यमुपधापूर्वं सोऽन्त-
स्थात्वमवाप्नुयात् ॥ १४२ ॥ सँय्यौमि संव्वपामीति तँ-
ल्लोकं च यथा भवेत् ॥ अपदान्तस्य रेफे न यद्दम्नोऽ-
ऽतिसर्प्पति ॥ १४३ ॥ एकमात्रो द्विमात्रः स्यात्त्रिमा-
त्रान्मात्रिको यथा ॥ त्वꣳ सोम हवीꣳषि सꣳस्रष्टा
न संय्युजि ॥ १४४ ॥ अनुस्वारो द्विमात्रः स्याद्वर्णा

व्यञ्जनोदयः ॥ ह्रस्वाद्वा यदि वा दीर्घाद्देवानाꣳ हृदये यथा ॥ १४५ ॥ मकारः प्रत्यये स्पर्शे भवेत्तद्वर्गपञ्चमः ॥ व्रजङ्गच्छ ब्रृतञ्चरिष्यामि ग्राण्डस्तथा पुनः ॥ १४६ ॥ एतल्लेदम्पित्वव्यश्च यच्छन्नाम्यञ्च वै यथा ॥ संय्योगादिः स्वराद्द्वित्त्वं प्राप्नोतीति विदुर्बुधाः ॥ १४७ ॥ तत्पदान्तपदाद्योर्वा पदमध्येऽपि सर्व्वतः ॥ सम्म्यक्स्रवन्ति सरितः सन्धौ तु पदयोर्य्यथा ॥ १४८ ॥ अनुष्टुप्प्शारदी तद्वत्प्रथमस्तु द्विकल्पितः ॥ मध्येऽश्व-स्तूपरो यद्वदश्वस्य त्वा तथाऽपरम् ॥ १४९ ॥ अस्वरान्न भवत्येतत् अधि स्रुत्कर्णवद्यथा ॥ परं रेफहकाराभ्यां व्यञ्जनं तूष्मवर्जितम् ॥ १५० ॥ द्वित्त्वमापद्यते रेफहकारौ तु न कुत्र चित् ॥ यथा सूर्य्योऽथ सर्व्वेभ्यो बाह्वोर्गृह्णामि चैव हि ॥ १५१ ॥ ऊष्माणो रेफसङ्क्रान्ता न द्विः स्युश्चेत्स्वरोदयाः ॥ यथाऽर्शसदुपचितां वर्षो वर्षीयसीति च ॥ १५२ ॥ सहस्रशीर्षा पुरुषो देवस्बर्हिर्य्यथा स्मृतम् ॥ अन्तस्थाभिर्य्यदा युक्ता ऊष्माणो रेफपूर्व्वकाः ॥ १५३ ॥ वर्ष्याय चान्तः पार्श्वयञ्च रेफाद्द्वित्त्वं भजन्ति ते ॥ ऊष्मान्तस्थापरः स्पर्शो द्वित्त्वमापद्यते यथा ॥ १५४ ॥ अश्मन्नूर्जं सस्नितमं धिष्ण्या राष्ट्रं च गृह्णते ॥ यकारात्स्पर्शसँय्योगो नोपलभ्येत कुत्र चित् ॥ १५५ ॥ अल्माल-

श्च दधिक्राऽग्राः पुरुराऽग्रास्तथैव च ॥ यदि चास्वरपूर्व्वाः स्युरूष्मान्तस्स्था न तत्परः ॥ १५६ ॥ स्पर्शो द्वित्वमवाप्नोति स्थालीभिर्द्दिवः स्कम्भनीः ॥ यत्र चोभयतः स्पर्शैः संय्युक्ताः शषसाः सहाः ॥ १५७ ॥ तत्र नाद्यः क्रमो ज्ञेयो नापरो बोधितो बुधैः ॥ पक्ष्माणि वाऽथ सुह्मा च विश्मापस्न्या च तथा पुनः ॥ १५८ ॥ नेदृशेषु द्विरुक्तिः स्यादिति प्राज्ञम्मनीषिणः ॥ जिह्वामूलीयतः स्पर्श उपध्मानीयतस्तथा ॥ १५९ ॥ सऽदूधानो व्यसुष्कविद्यौष्पितेत्यादिकँय्यथा ॥ विसर्ज्जनीयाच्च परो यः स्पर्शो व्यञ्जनोदयः ॥ १६० ॥ सोऽपि द्वित्वमवाप्नोति युञ्जानः प्प्रथमँय्यथा ॥ सकारस्य द्विरुक्तिर्य्या सा द्वयोरेव नान्यतः ॥ १६१ ॥ आ च शास्स्था च रास्स्वेयत्सकारोऽत्र द्विरुक्तितः ॥ ह्रस्वपूर्व्वौ ङनौ स्यातां पदान्तौ द्विः स्वरोदयौ ॥ १६२ ॥ युङ्ङसीति तथा चाप्सन्नूर्ज्जमित्यादिकँय्यथा ॥ प्रथमैस्स्वर्ग्गीयैर्द्वितीया द्विर्भवन्ति हि ॥ १६३ ॥ तृतीयैस्तु चतुर्थास्स्युर्व्विकख्यायाजिघ्रकँय्यथा ॥ उखयं सखयं च मुखयं च वर्जयित्वा पदत्रयम् ॥ १६४ ॥ ख्याधातोः खययोः स्यातां कशौ गार्ग्यमते यथा ॥ व्विकश्याऽऽक्शातमित्येतन्माध्यन्दिनविरोधकृत् ॥ १६५ ॥ व्विकख्याय कखया युक्ताश्चक्रया

यसँय्युतम् ॥ १६६ ॥ व्विषप्फुरन्ती च षष्ठ
श्चैवं चतुर्थकाः ॥ आजिग्घ्रगधरायुक्ता
डढवास्तथा ॥ १६७ ॥ अब्बनो दधवाश्चैवं
ङ्भरसँय्युतम् ॥ ऋवर्णे न द्विरुक्तिः स्यात्
विहाय च ॥ १६८ ॥ लृवर्णेऽपि तथैव स्य
चानिष्टृतँय्यथा ॥ अवसानस्थितं चापि व्यञ्ज
रुच्यते ॥ १६९ ॥ ऊर्क् सूनृता पदे एवं सं
वार्य्यते ॥ स्वरात्परश्छकारस्तु सर्वत्र द्वित्वम
१७० ॥ यस्यातिहाय सह्नेति पदत्रयपरं वि
रुक्तिं वर्ज्जयेन्नित्यं यमेऽपि परतः स्थिते ॥ १
कथ्ना देदिश्यते नारी ककारोऽत्रैकऽएव वि
परे निषेधस्तु पुनर्द्वित्वनिवारकः ॥ १७२ ॥
पाल्पमप्रभृतिप्राज्ञस्तेषां मनीषिणाम् ॥ सँय
पूर्व्वाङ्गं यमस्येति विरोधकृत् ॥ १७३ ॥ व
तत्साधु नत्वन्यत्कल्पनाक्षमम् ॥ अपञ्चमात
पञ्चमेषु परेषु च ॥ १७४ ॥ यमोत्पत्तिर्भ
क्रमः पाल्पमा निदर्शनम् ॥ स्वरात्संय्योगपूर्व्व
ज्जातो द्वितीयकः ॥ १७५ ॥ तस्यैव
स्यात्पञ्चमैरन्वितो यदि ॥ स्पर्शानां पञ्चमैर्य्य
रो ये यमाः स्मृताः ॥ १७६ ॥ अयस्पिण्डेन
घनबन्धाः प्रकीर्त्तिताः ॥ यमास्तदा निवर्त

मध्ये भवेद्यदि ॥ १७७ ॥ ऊर्णापिण्डेन ते तुल्याः पाशैस्तमन्व्या निदर्शनम् ॥ स्पर्शोऽपञ्चमा ये च अन्तस्थाभिश्च सँय्युताः ॥ १७८ ॥ दारुपिण्डेन ते तुल्याः स्थबन्धाः प्रकीर्त्तिताः ॥ अपञ्चमे स्ववर्गीये न प्राग्वर्णो द्विरुक्तिभाक् ॥ १७९ ॥ तद्देवानां च यद्देवाऽअन्तरिक्षम्पुरीतता ॥ ईड्याब्राह्मीनिसावेतावुद्रश्चापि तथैव च ॥ १८० ॥ चरद्द्रव्यस्य वचनो द्वित्त्वं नैवात्र विद्यते ॥ उच्चरचस्तथा श्वित्र चित्र सत्र तथैव च ॥ १८१ ॥ यत्र तत्र पदेष्वेषु व्यञ्जनं न द्विरुच्यते ॥ उपोत्थितमुत्तम्भनमुत्तभानोत्थिताय च ॥ १८२ ॥ उत्थाय बृहती चैषु त्रयः स्पर्शा भवन्ति हि ॥ वर्णं द्विवर्णसँय्योगे एकवर्णवदुच्यते ॥ १८३ ॥ स्वरमध्ये सजातीये विजातीये द्वयोः श्रुतिः ॥ कुक्कुटोऽसि तथा तन्नऽआज्यं भुज्युः श्रुतिर्द्वयोः ॥ १८४ ॥ स्पर्शात्परककारस्य स्फोटनं दोषकृन्न वा ॥ अत्राचार्य्याश्रयाद्वित्त्वं स्फोटनं द्वित्वनाशनम् ॥ १८५ ॥ अयस्पिण्डेन तत्तुल्यं तस्मादुच्चारणं तथा ॥ काण्डात्काण्डाद्वषट्कृतं यक्ष्मं लोमादिकँय्यथा ॥ १८६ ॥ स्ववर्गीयैस्तु सँय्योगः स्पर्शानां सम्भवेद्यदि ॥ तत्पूर्वस्य श्रुतिर्न्नास्ति विरामव्यञ्जनस्य च ॥ १८७ ॥ द्वितीयाश्च चतुर्थाश्च वर्णाः सो-

मुखात् ॥ १८८ ॥ तं धारयेत्प्रयत्नेन घनबन्धं समुच्च-
रेत् ॥ सक्थ्ना दद्मस्तथा दद्ध्मा अघ्न्या इति निद-
र्शनम् ॥ १८९ ॥ स्वराः सँय्योगपूर्व्वा ये व्यञ्जनान्ता-
स्तथान्तगाः ॥ एषां कालो द्विमात्रः स्यान्न तु दीर्घा
हि ते स्मृताः ॥ १९० ॥ यथाऽग्निर्द्दूय्यंथा विष्णुः
प्रत्यङ् दध्याङ् ऋषिस्तुतम् ॥ याहि पाहि रक्ष मधु
विद्यादेवं निदर्शनम् ॥ १९१ ॥ व्यञ्जनान्तस्य मोक्षः
स्यात्करणस्थानतः पदे ॥ अन्यदन्यप्रयत्नेन पदमारभ्य-
ते बुधैः ॥ १९२ ॥ अन्यथा तु पदादौ च द्वित्वमाप-
द्यते ध्रुवम् ॥ सँय्यामि सँव्पामीति इमम्मेति निदर्श-
नम् ॥ १९३ ॥ अर्द्धर्चादेः समाप्तौ च मोक्षणं तु वि-
धीयते ॥ पादश्छन्दोऽनुरोधेन एकद्वित्रिचतुष्पदः ॥
१९४ ॥ अप्यनेकपदैः क्वाऽपि दृश्यते पादपूरणम् ॥
हृदि स्पृशं यथैकस्मिन्पदे स्यात्पादपूरणम् ॥ १९५ ॥
क्रतोर्भद्रस्य द्विपदं क्रतुन्न भद्रमित्यतः ॥ अग्ने
त्वन्नोऽअन्तमस्त्र विद्यात्पादचतुर्विधम् ॥ १९६ ॥ वि-
धूममग्नेऽनेकपदमेवमादिनिदर्शनम् ॥ ङनकारौ प-
दान्तीयौ मकारे परतः स्थिते ॥ १९७ ॥ कताभ्यां
व्यवधीयेते प्राङ्ङ्क्सोमश्च यथा तथा ॥ प्रत्यङ्क्सोम-
स्तीन्त्समुद्रानस्मान्त्सीते निदर्शनम् ॥१९८॥ "ऋकारे
प्रत्यये कण्ठ्यः पाठे ह्रस्वत्वमाप्नुयात् ॥ स्याद्दऽऋषभमि-

न्द्रोऽथ व्विश्वकर्म्माऽऋषिस्तथा ॥ १९९ ॥ येनऽऋषय-
ऽइत्यत्र यत्रऽऋषयऽइत्यपि ॥ ह्रस्वे ह्रस्वविधानँय्यत्त-
त्सन्धिविनिवर्त्तकम् ॥ २०० ॥ एओ ऐऔ तु चत्वा-
रः क्रमादेव स्वरे परे ॥ अयवायावतां यान्ति इडऽ-
एहि कथानुवत् ॥२०१॥ सरस्वत्या ऽअग्रजिह्व ताऽउ-
भौ च यथा क्रमम् ॥ यवयोरत्र लोपः स्यात्स्वरमध्ये
पदान्तयोः ॥ २०२ ॥ अयादौ यवयोर्ल्लोपे न पुनः
सन्धिरिष्यते ॥ असस्थाने वकारस्य लोपन्नेच्छन्ति
सूरयः ॥ २०३ ॥ पादादौ च पदादौ च सँय्योगावग्र-
हेषु च ॥ यः शब्दइति विज्ञेयो योऽन्यः स य इति
स्मृतः ॥ २०४ ॥ युक्तेन मनसा यद्वत्तत्त्वा यामि तथाऽ-
परम् ॥ अनूकाशेन बाह्यञ्च योगे योगे निदर्शनम् ॥
२०५ ॥ उपसर्गपरो यः स पदादिरपि दृश्यते ॥ ई-
षत्स्पृष्टो यथा वि यत्पदच्छेदे परो भवेत् ॥ २०६ ॥
यदेव लक्षणं यस्य वकारस्यापि तद्भवेत् ॥ यत्र यत्र
विशेषः स्यादिदानीं स तु कथ्यते ॥ २०७ ॥ वकार-
स्त्रिविधः प्रोक्तो गुरुर्ल्लघुलघूतरः ॥ आदौ गुरुर्ल्लघु-
र्म्मध्ये पदस्यान्ते लघूतरः ॥ २०८ ॥ उपसर्गपरौ यत्र
यववारौ पदादिगौ ॥ ईषत्स्पृष्टौ ततो ज्ञेयावभि यु-
ञ्ज उपा यथा ॥ २०९ ॥ परि वाजपतिः कविः प्रवो-
चं च निदर्शनम् ॥ अनु योजान्विन्द्र ते तु उप युञ्जँ-

ग्विना तथा ॥ २१० ॥ त्वदर्थवाचिनौ वो वाँग्वा वै य-
दि निपातजौ ॥ आदेशाश्च विकल्पास्युरीषत्स्पृष्टा
ह्रि ते स्मृताः ॥ २११ ॥ देवो वः सविता य़ा वाँग्वातो
वाऽथ तथा न वै ॥ तव ग्वायष्टतस्पतेऽस्ति वान्वा निद-
र्शनम् ॥ २१२ ॥ द्वैधीभावे समुत्पन्ने लक्षणान्निर्ण-
यो भवेत् ॥ लक्षणँग्वाऽविनापि स्यात्सम्प्रदायोऽविना-
शवान् ॥ २१३ ॥ प्रमाणानुगतं वाक्यं यो मोहाद्वातु
मिच्छति ॥ प्रतिवातं स मूढात्मा पांसुं प्रक्षिपति स्व-
यम् ॥ २१४ ॥ कण्ठ्या वर्णोऽग्निदैवत्यास्तालव्याः
सोमदैवताः ॥ जिह्वामूलीया नैर्ऋत्या रौद्रा दन्त्याः
प्रकीर्त्तिताः ॥ २१५ ॥ ओष्ठ्याश्चैवाश्विना ज्ञेया वाय-
व्या मूर्द्धसम्भवाः ॥ शेषास्तु वैश्वदेवाः स्युरिति कात्या-
यनोऽब्रवीत् ॥ २१६ ॥ क्रियावाचकमाख्यातमुपसर्गो
विशेषकृत् ॥ सत्त्वाभिधायकं नाम निपातः पादपूर-
णः ॥ २१७ ॥ भारद्वाजकमाख्यातं भार्गवं नाम भाष्य-
ते ॥ वासिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः ॥
२१८ ॥ सर्व्वन्तु सौम्यमाख्यातं नाम वायव्यमिष्यते ॥
आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ॥ २१९ ॥
स्वरास्तु ब्राह्मणा ज्ञेया वर्गाणां प्रथमाश्च ये ॥ द्विती-
याश्च तृतीयाश्च चतुर्थाश्चापि भूमिपाः ॥ २२० ॥ उदात्तं
ब्राह्मणं विद्याद्भारद्वाज ऋषिस्ततः ॥ गायत्रं च भवेच्छ-

न्दो नियोगो ब्रह्मसाधने ॥ २२१ ॥ नीचं तु स्वरि-
यं प्राहुर्गौतमोऽस्य च देवता ॥ छन्दस्त्रैष्टुभमेवास्य
विनियोगोऽधनाशने ॥ २२२ ॥ स्वरितं वैश्यमेवाहु-
र्मुनिर्गार्ग्योऽस्यकीर्त्तितम् ॥ जागतं तु भवेच्छन्दो नि-
योगः शत्रुनाशने ॥ २२३ ॥ एषा मन्त्ररहस्यस्य मञ्जूषो-
द्घाटिता मया ॥ एतत्सर्व्वं विदित्वा तु ब्रह्मलोके महो-
यते ॥ २२४ ॥ अनेन विधिना वेदं योऽधीते श्रद्धया
द्विजः ॥ सोऽश्वमेधसहस्रस्य फलं प्राप्नोति पुष्कलम् ॥
२२५ ॥ रहस्यं यो न जानाति लक्षणं चार्षकादिक-
म् ॥ सोऽध्यापने न योग्यः स्याज्जपहोमादिकर्म्मसु ॥
२२६ ॥ अमरेशकृतामेतां शिक्षां यो धारयेत्सुधीः ॥
विद्वज्जनसभामध्ये जयं स लभते ध्रुवम् ॥ २२७ ॥ इ-
त्यमरेशकृता वर्णरत्नप्रदीपिकाशिक्षा समाप्ता ॥

---

## अथ केशवदैवज्ञविरचिता न
## वात्मिका व्याख्यानोदाहरण
## ऽऽरभ्यते ॥ अथातः केशवी
## क्षां व्याख्यास्यामः ॥

---

नत्वा गणपतिं देवं परिभाषाङ्कसूचकम्
च्यते केशवेनेदं वेदाध्यायिसुखाप्तये ॥ १ ॥
माध्यन्दिनीयपरिभाषा ॥ अङ्कानां नवानां
णां मध्ये येन सूत्रेण पदादिमध्यान्तवर्णेषु सञ्ज्ञा
यते तद्विना पदादिवर्णेष्वेव सञ्ज्ञा न जायते
च्यते ॥

### पदादौ पूर्व्वाहल्व्वोर्द्विर्य्योच्चार
### म्पूर्व्वयोश्छन्दसि ॥१ ॥

माध्यन्दिनीये पदादौ आद्यहलिवहीनयोर्व
कारयोः सम्पूर्वयोश्चाप्यनयोः क्रमाद्द्वित्ववका
रोच्चारः स्याच्छन्दसि ॥ हल् इति व्यञ्जनम्। अस्
रणानि संहितायाः प्रथमाध्याये प्रथमकण्डि
वायवस्थऽइत्यत्र व्वायवइत्युच्चारः। तथैव द्विती

कायां वसोः पवित्रमित्यत्र व्वसोः पवित्रमित्युच्चारः । प्रथमर्चि यजमानस्येत्यत्र य्ँजमानस्येत्युच्चारः। द्वितीयर्चि यज्ञपतिरित्यत्र य्ँज्ञपतिरित्युच्चारः । कस्त्वा युनक्ती-त्यत्र युनक्तीत्युच्चारः । सम्पूर्वकस्योदाहरणानि संहितायाम्प्रथमाध्याये देवस्य त्वेत्यृङ्मध्ये संवपामी-त्यत्र सँव्वपामीत्युच्चारः। संवर्च्चसेत्यत्र सँव्वर्च्चसेत्युच्चारः । जनयत्यै त्वा सँय्यौमीत्यत्र सँय्यौमीत्युच्चारः । सं-यज्ञपतिरित्यत्र सँय्यँज्ञपतिरित्युच्चारः । इत्यादिषु प-दादित्वात्सम्पूर्वत्वाच्च यवयोर्द्वित्ववकारयकारौस्तः । न वयकारौ इत्यादि सर्वत्र ज्ञेयम् । पदादाविति कि-म् । आद्यकण्डिकायां प्रजावतीरनमीवाः । प्रार्प्पयतु श्रेष्ठतमायेत्यादिषु वकारमकारयोः पदादित्वाभावा-न्न द्वित्ववकारयकारौ स्तइति । आद्यहलिवहीनयो-रिति किम् । द्वितीयाध्याये ‘अग्ने व्वाजजिद्वाजन्त्वा । तृतीयाध्याये अव रुद्रमित्यृङ्मध्ये श्रेयसस्करद्यथा न इत्यनयोर्वकारयकारयोः पदादित्वमस्त्यतो द्वित्वज-कारोच्चारः । अनयोरुदाहरणयोस्तु आद्यदकारहृ-ल्युक्तत्वान्न द्वित्वजकारोच्चारो न द्वित्ववकारोच्चारश्चे-ति प्रथमसूत्रव्याख्या जकारोच्चारणार्थमन्यत्सूत्रं च प्रदर्श्यते ॥

## पदान्तमध्यङ्कहरेफयुग्यस्य यश्च ॥२॥

पदान्तमध्ये ऋकारहकाररेफैश्च युक्तस्य यस्य उ
च्चारणं छन्दसि माध्यन्दिनीये । उदाहरणानि
विंशतितमेऽध्याये प्रथमा द्वितीयैरित्येकादशकण्डिका
सामान्यृग्भिः । द्वितीयाध्याये यम्परिधिमित्यङ्कमध्ये
पणिभिर्गुह्यमानइत्यत्र हकारजकारयुक्तोच्चारः ।
द्योऽसि येनेतिकण्डिकायां मह्याँव्विदो भूयाः । घृ
चीस्थो धुर्य्यौ । तृतीयाध्याये उपत्वेत्यङ्कमध्ये घृ
चीर्य्यन्तु हर्य्यत इत्यादिषु ऋकारहकाररेफयुक्ता
ज्जकारोच्चारो न यकारः । ऋहरेफयुक्तस्येति कि
अभिषिञ्चन्त्युत्सिञ्चन्ति । अत्र न जकारोच्चारः ।
तः ऋहरेफयुक्तत्वाभावात् । एवमन्यत्रापि बोध्य
इति द्वितीयसूत्रव्याख्या । सूत्रद्वयार्थे कारिकाऽ
पूर्वोहलयोः पदादौ च वेदे सम्पूर्वयोर्द्विजौ ॥ यस्
रेफयुक्तस्य जः पदाद्यन्तमध्यके ॥

षः खष्टुमृते च ॥ २ ॥

पदान्तमध्ये षकारस्य खकारोच्चारस्स्याट्टवर्गं
ना छन्दसि माध्यन्दिनीये । उदाहरणानि । इषे
र्ज्जेत्वेत्यत्र खकारोच्चारो न षकारः । एवं
ह्मणेऽपि "इयं पृथिवी सर्वेषां भूतानामित्यत्र क
यखकारसदृशोच्चारो न मूर्द्धन्यषकारइति । टवर्ग
नेति किम् । आद्ये ऋचि "श्रेष्ठतमाय कर्म्मणे" इ

टवर्गयुक्तत्वात्षकारोच्चारएव न खकारोच्चारइत्यादि सर्वत्र ज्ञेयम् ॥ इति तृतीयसूत्रं व्याख्यातम् ॥

## अहल्शल्यूर्द्ध्वरेफस्य सैकारः प्राक्च ॥ ४ ॥

पदान्तमध्ये हलित्वहीनशल्यूर्ध्वरेफस्य सैकारः प्रागुच्चारश्छन्दसि माध्यन्दिनीये ॥ शल्इति शषसहा ज्ञेयाः । उदाहरणानि यथा । अष्टत्रिंशदध्याये सप्तदशकण्डिकायां अभीमं महिमा दिवमित्यत्र दर्शतमित्यूर्ध्वरेफस्य प्रागेव सैकारोच्चारः । दरेशतमिति न तु सोर्ध्वरेफोच्चारः । एकोनचत्वारिंशदध्याये अग्निरं॰ हृदयेनाशनिमित्यृङ्मध्ये पर्शव्येनेत्यत्र परेशव्येनेत्युच्चारः ॥ पञ्चमाध्याये "द्यास्मा" इति कण्डिकायां शतवल्शो विरोह सहस्रवल्शा इत्यत्रापि रलयोः सावर्ण्याल्लस्यापि प्राक्सैकारोच्चारः, शतवलेशो विरोह सहस्रवलेशा इति न लकारयुक्तोच्चारः । व्यसोः पवित्रमसीति कण्डिकायां ह्वार्षीत् अत्रापि प्राक्सैकारोच्चारः ह्वारेषीत् । षकारस्योदाहरणमेव सकारस्य तत्कथं "आदेशप्रत्यययोः" । इण्कवर्गाभ्यां परस्य मूर्द्धन्यादेशइति कृत्वा रेफस्तु इणमध्ये वर्त्तते तर्हि रेफात्परो यः सकारः स मूर्द्धन्यएवेति कृत्वा षकारसकार-

योरेकमेवोदाहरणम् । आर्ष्यां संहितायां तृतीयाध्याये प्रथमर्चि बर्हिषि त्वा बर्हिरसीत्यनयोर्बरेहिषि त्वा बरेहिरसीत्येवमेवोच्चारो न तु सोर्ध्वरेफोच्चारः । त्रयोविंशत्यध्याये "केष्वन्त इत्यङ्मध्ये "एतद्ब्रह्मन्नुपवल्हामसीत्यत्र वल्हामसीत्युच्चारो रलयोः सावर्ण्यात् एवमादीनि ज्ञेयानि । हलिवर्ज्जीनेति किम् । व्रसोः पवित्रमसीति कण्डिकायां "यज्ञपतिह्वर्षीत् ॥ एकत्रिंशदध्याये नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौरित्यत्र हकारषकारयोर्वकारणकारहल्युक्तत्वादूर्ध्वरेफयुक्तएवोच्चारो न प्राक्सैकारोच्चार इति । शलीति किम् । इषे त्वोर्ज्जे त्वा प्रार्प्पयतु इत्यत्र शलिवर्ज्जीनत्वात्सोर्ध्वरेफोच्चारो न प्राक्सैकारोच्चार इत्यादि सर्वत्र ज्ञेयम् । इति चतुर्थसूत्रव्याख्या । एतदर्थे कारिकाऽपि । षस्योच्चारः खकारः स्याट्टुं विना छन्दसि खके ॥ विह्लशल्यूर्ध्वरेफो यः सैकारः प्राक्समुच्चरेत् ॥ ४ ॥

## अनुस्वारस्य ꣳ शलि रेफे च परे ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः संयोगे गुरुश्च ॥ ५ ॥

पदान्तमध्ये शलि रेफे च परे अनुस्वारस्य ꣳ स्याद्ध्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः संयोगे च परे गुरुः स्याच्छ-

न्दसि माध्यन्दिनीये। उदाहरणानि यथा । त्रिठँ॰श-
द्वामेति । ब्राह्मणेऽपि सर्वठँ॰ षडिति । द्वितीयाध्या-
ये अग्ने गृहपतऽइति कण्डिकायां भूयासठँ॰ सुगृह-
पतिः । तस्यामेव शतठँ॰ हिमाः । तृतीयाध्याये स-
न्त्वमग्नऽइति कण्डिकायां सम्प्रजया सठँ॰ रायस्पोषे-
णेति । प्रथमाध्याये पृथिवि देवयजन्योषध्यास्तऽइत्यृ-
ङ्मध्ये पृथिव्याꣳ शतेन पाशैः । द्वादशाध्याये सुप-
र्णासोति कण्डिकायां यजूꣳषि नाम । द्वितीयाध्याये
एषा तऽइत्यृङ्मध्ये ससृवाꣳसँव्वाजजितम् । सम्बर्हिर-
ङ्क्ताꣳ हविषा । तृतीयाध्याये उभा वामिति क-
ण्डिकायां इषाꣳ रयीणाम् । एकविंशत्यध्याये होता
यक्षत्सुरेतसमृषभमित्यृङ्मध्ये सुरया भेषजꣳ श्रिया
न मासरम् । अष्टादशाध्याये आयुर्यज्ञेनेत्यृङ्मध्ये
कल्पताꣳ श्रोत्रँय्यज्ञेन कल्पताम् । एकादशाध्या-
ये दꣳष्ट्राभ्याम्मलिम्लून । एकोनविंशतिमेऽध्याये पु-
रोडाशैर्हवीꣳष्या । तृतीयाध्याये सोमानꣳ स्वरणम् ।
सन्त्वमग्नऽइत्यृङ्मध्ये समृषीणाꣳ सुतेन । पञ्चमा-
ध्याये सिꣳह्यसि । एवं रेफसँय्योगे परे ज्ञेयम् । इ-
त्यादिषु क्रमेण दीर्घह्रस्वगुरूच्चाराः कर्त्तव्या न व्यस्ता-
इति । शलि रेफे च परे किम् । इन्द्राय भागं प्रजाव-
तीरित्यनयोरनुस्वारस्याग्रे शल्रेफाभावादनुस्वार ए-

व न ठं॰कारइति पञ्चमसूत्रं व्याख्यातम्। सूत्रार्थे का-
रिकाऽपि। अनुस्वारस्य ठं॰ वेदे शलि रेफे परे भवेत्॥
ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः सँय्योगे च परे गुरुः॥ ५॥

## शर्पूर्व्वाणामृद्धीनकादिपञ्चवर्गा-
## णां द्वित्वं विसर्गाद्रेफयुक्तानाम्॥ ६॥

पदान्तमध्ये शर्पूर्वाणां ऋकारहीनकादिपञ्चव-
र्गाणां विसर्गात्परेषां रेफयुक्तानामेषां च द्वित्वं स्या-
च्छन्दसि माध्यन्दिनीये॥ शर्इति शषसा ज्ञेयाः। उ-
दाहरणानि यथा। द्वितीयाध्याये अस्क्कन्नमद्य दे-
वेभ्यः। आधत्तेति मध्ये पुष्क्करस्रजम्। समिदसी-
त्यृङ्मध्ये कस्याश्चिदभिशस्त्यै। कृष्णोऽस्याखरेष्ठः। सू-
र्य्यस्त्वा पुरस्तात्पातु। उपहूतो द्यौष्पितोपमाम्। म-
यीदमित्यृङ्मध्ये दधात्वस्मात् इत्यादिषु कादिप-
ञ्चवर्गाणामेव द्वित्वं शर्य्युक्तत्वान्न शषसानां विसर्गा-
द्रेफयुक्तानामुदाहरणानि यम्परिधिमित्यस्यार्च्चि म-
ध्ये अग्नेः प्रियमस्या अग्निमकाण्डकायां बृहन्तः
प्रस्तरेष्ठाः। तृतीयाध्याये आ नऽएतु मनः पुनः क्रत्वे
दक्षाय जीवसे। ऋकारहीनत्वादिति किम्। तृती-
याध्यायेऽष्टादशकाण्डकायां व्ययस्कृतं सहस्कृतम्। चतु-

विंशत्यध्याये द्वितीयकण्डिकायां बार्हस्पत्यः पृषतीति द्वितीयाध्याये द्वितीयर्चि ऊर्ध्वमृद्सन्त्वा स्तृणामीत्यत्र ककारपकारतकाराणां ऋकारयुक्तत्वान्न द्वित्वमित्यादि ज्ञेयम्। एतदर्थे कारिकापि। वृकादयः पञ्चवर्गाः अपूर्वा गुरवश्च ते॥ विसर्गाश्च परे तद्दृयुक्ताश्छन्दसि स्मृताः॥ ६॥ अरादिज्ञापनार्थं प्रत्याहारसूत्राणि लिख्यन्ते। तथा च। अइउण्। ऋलृक्। एओङ्। ऐऔच्। हयवरट्। लण्। ञमङणनम्। झभञ्। घढधष्। जबगडदश्। खफछठथचटतव्। कपय्। शषसर्। हल्। इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि। एषामन्त्या इतः। हलन्त्यम्। उपदेशेऽन्त्यं हलित्स्यात्। आदिरन्त्येन सहेता। अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात्। यथाऽणिति अइउवर्णानां संज्ञा। एवमच् हल् अलित्यादयः प्रत्याहारा ज्ञेयाः। कस्य वर्णस्य पुनः किं स्थानमित्यपेक्षायामाह। अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्द्धा। लृतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु।

इति जिह्वामूलीयः । ᳲ पइत्युपध्मानीयः । अं इत्यनुस्वारः । अः इति विसर्जनीयः इति ज्ञेयम् । पाणिनीयसूत्रे अपि द्वित्वविधायके भवतः । तथाहि । अनचि च । अचः परस्य यरो द्वे वा स्तो न त्वचि । अचो रहाभ्यां द्वे ॥ अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वास्तः । पाणिनीयद्वित्वसूत्रद्वयोदाहरणानि प्रथमाध्याये द्वितीयर्चि पृथिव्यसि मातरिश्वनो घर्म्मोऽसि विश्वधाऽअसि । दृꣳहस्व माह्वार्म्मा ते इत्यादि सर्वत्र ज्ञेयम् । इति षष्ठसूत्रव्याख्यानम् । एतदर्थं कारिकाद्वयमपि । पाणिनीयस्य सूत्राभ्यां द्वित्वं सर्वत्र कीर्त्तितम् । ङटं विना कादयः पञ्च प्रपूर्व्वा द्वित्वमाप्नुयुः ॥ ७ ॥ विसर्गाच्च परे ते रेफयुक्ताश्छन्दसि स्मृताः ॥ पाणिनीयप्रातिशाख्यसूत्रैर्द्वित्वं प्रकीर्त्तितम् ॥ ८ ॥

## न सो ऽयोश्च ॥ ७ ॥

पदान्तमध्ये वकारयकारयोः परयोः सकारस्य द्वित्वं न स्याच्छन्दसि माध्यन्दिनीये । उदाहरणानि यथा । द्वितीयाध्याये द्वितीयर्चि स्तृणामि स्वासस्थाम्भुवपतये स्वाहा । प्रथमाध्याये मर्म्मासिवधूतꣳ रक्षः । धृष्टिरस्यपाग्ने इत्यादिषु सकारस्य यवयोः परयोर्न्न द्वित्वम् एवं सर्वत्र ज्ञेयम् । इति सप्तमसूत्र

व्याख्यानम् ॥

## हल्युतायुतस्योः सैकारश्च ॥ ८ ॥

पदान्तमध्ये हल्युतायुतस्य ऋकारस्य ऋवर्णस्य सैकारइवोच्चारः स्याच्छन्दसि माध्यन्दिनीये । उदाहरणानि यथा द्वितीयेऽध्याये कृष्णोऽसीत्यत्र क्रैष्णोऽसीत्युच्चारो न ऋकारः । अग्नये इत्यृङ्मध्ये पितृमते इत्यत्र पित्रे मते स्याद्वेत्युच्चारः । तृतीयाध्याये अयन्ते योनिर्ऋत्विय इत्यृङ्मध्ये रैत्विय इत्युच्चार इत्यादि सर्वत्र ज्ञेयम् । इत्यष्टमसूत्रव्याख्या सूत्रार्थे कारिकाऽपि । यवयोः परयोः सस्य द्वित्त्वं न स्यात्तु छन्दसि ॥ ऋकारो हल्वियुग्युग्वा सैकारश्छन्दसि स्मृतः ॥ ८ ॥

## ह्रस्वं किञ्चिद्दीर्घं हल्युताकारे हल्विसर्गयुग्वर्णे च न संहितायाम् ॥ ९ ॥

पदान्तमध्ये च ह्रस्वत्वस्य किञ्चिद्दीर्घोच्चारः स्याद्धल्युतायुत आकारे परे हल्विसर्गयुग्वर्णे च परे न स्याद्वाजसनेयसंहितायाम् । अस्योदाहरणानि यथा संहितायां प्रथमाध्याये प्रथमर्चि इषे त्वोर्जे त्वा वायवस्थ देवो व इत्यादिषु इकारयकारस्याकारा ह-

स्वाः । अत एषां किञ्चिद्दीर्घोच्चारो न तु ह्रस्वता।
सविताऽत्र तकारश्च्युत आकारोऽग्रे तिष्ठति । अतः
सकारविकारयोर्ह्रस्वतैव । इर्ठं०हस्य मा ह्वाम्नीते ।
प्राप्यंयतु । अत्र पकारयकारयोः किंचिद्दीर्घता ।
श्रेष्ठतमाय अत्र मकारयुतआकारो ऽग्रेस्ति । अतः
टकारतकारयोर्ह्रस्वतैव । अत्र यकारस्य किञ्चिद्दी-
र्घता । कर्म्मण ऽआप्या । अत्र मकारणकारयोर्हल्युता-
कारोऽग्रेऽस्ति । अतो ह्रस्वावेव । यह्वमघ्न्या अत्र
घ्यस्य कीञ्चिद्दीर्घता । इन्द्राय भागं प्रजावतीः अत्र
यकारमकारयोरग्रे हल्युत आकारोऽग्रेऽस्ति अतो ह्र-
स्वावेव । वस्य किञ्चिद्दीर्घता । रनमीवाऽअयक्ष्मा
मा वस्तेनऽईशत इत्यादिषु रेफनकाराकाराणां कि-
ञ्चिद्दीर्घोच्चारः । ईशत मा" अत्र हल्युतरआकारो-
ऽग्रेऽस्ति । अतः शतयोर्ह्रस्वतैव ॥ माऽघशर्ठं० सो ध्रुवा
ऽअस्मिन्गोपतौ स्यात बह्वीः । अत्र घकारपकारत-
काराणां किञ्चिद्दीर्घता । यजमानस्येत्यत्र मयुतआका-
रोऽग्रेऽस्ति । अतो ह्रस्वतैव यजयोः स्यस्य च किञ्चिद्दी-
र्घता पशून्पाहि । अत्र पकारह्रिकारयोः किञ्चिद्दी-
र्घोच्चारः । द्वितीयाध्याये मित्रावरुणौ त्वोत्तरतइत्यत्र
वकाररुकारयोः किञ्चिद्दीर्घता । तकाररेफयोर्हल्नि-
र्मुक्तवर्णोऽग्रेऽस्ति । अतो ह्रस्वतैव न दीर्घोच्चारः ।

प्रतिज्ञासूत्रे "ईषद्दीर्घता च भवति"। एकमात्राका-लापेक्षया किञ्चिदधिककालउच्चारणीयः सार्द्धक-मात्रिकः कालइत्यर्थः। अतएवार्ष्यां संहितायां दीर्घ-पाठेऽमुक्तोऽध्यायइति लिखितमाचार्य्यैः। इत्यादि सर्वत्र ज्ञेयम्॥ सूत्रार्थे कारिकाऽपि। ह्रस्वं दीर्घं भवेत्किञ्चित्संहितायां परो न चेत्॥ हल्संयुतायुताका-रश्चावर्णो हलिवसर्गयुक्॥ १०॥ नवानामपि सूत्राणां परिमिताः कारिकास्त्विमाः॥ केशवेन कृतास्ताः स्यु-र्वेदाध्ययनबोधिकाः॥ ११॥ परिभाषाङ्कसूत्रं च या-जुर्वेदं सकारिकम्॥ दैवज्ञकेशवेनेदं कृतं ह्रस्वस्वरा-न्वितम्॥ १२॥ ह्रस्वोदात्तादिभिर्भेदैः सह्रस्वस्वरलक्ष-णम्॥ शिक्षादिभिः षडङ्गैश्च विज्ञेयं वेदपाठकैः॥१३॥ इति श्रीदैवज्ञकेशवकृता प्रतिज्ञासूत्रानुसारिणी केश-वीशिक्षा समाप्ता॥

---

# अथ तत्कृता पद्यात्मिका शिक्षा

---

अनुदात्तादुदात्ताच्चेत्स्वरितोत्तर एव च ॥ हृच्छि
कर्णमूलेषु न्यसेदङ्गमसंशयम् ॥ १ ॥ अनुदात्तादुद
च्चेदनुदात्तपरस्तथा ॥ अनुदात्तं हृदि न्यस्योदात्तं व
भ्रुवि न्यसेत् ॥ २ ॥ पुनर्हृदि न्यसेन्नीचमिति शास्त्र
वस्थितिः ॥ प्रचितोच्चारणे न्यासो हस्तस्य नासि
ग्रतः ॥ ३ ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टो व्य
नस्वरः ॥ तैरोविरामः पादवृत्तस्ताथाभाव्यस्त ष
ष्टमः ॥ ४ ॥ एतेषां लक्षणान्याहुः कात्यायनमुनी
राः ॥ तत्र जात्यादिसञ्ज्ञानां चतुर्णां दर्शने कर व
५ ॥ तिर्य्यग्वक्रमयेद्धीमान्निपतद्दानवद्देव हि ॥ म
दानमिव चेदुदात्तः प्रत्ययः स्वरः ॥ ६ ॥ आद्यान्त
स्य जोच्चारः पदादौ पठितस्य च ॥ उपसर्गपरो
यस्य छन्दसि नेष्यते ॥ ७ ॥ पदस्याद्यन्तमध्ये स्या
द्धैः सँय्युतस्य च ॥ द्विर्भावे ऽप्येवमेव स्यादिति का
यनश्रुतिः ॥ ८ ॥ अन्तस्थानां द्वितीयस्य सैकारो न
रणं भवेत् ॥ अयुक्तहलिभः शषसैर्ऋकारेण यु
च ॥ ९ ॥ एवमेव तृतीयस्य शषसैः सँय्युतस्य च ॥
कारोच्चारणं कुर्यादिति शास्त्रव्यवस्थितिः ॥ १

ऋकारस्य च सँय्युक्तासँय्युक्तस्यापि सर्वतः ॥ सैकारो-
च्चारणं कुर्य्याल्लकारस्य तथा भवेत् ॥ ११ ॥ अथ
चान्तस्यान्तस्त्रिविधं गुरुमध्यमलघुत्वोच्चारः ॥ वा-
क्यस्यादिममध्यान्त्यस्य प्रादिकपरस्य लघ्वेव स्यात् ॥
१२ ॥ वो वां वा वै मन्त्रे लघवो गुरवः पदे च विज्ञे-
याः ॥ देवो वः सविताऽऽदौ त्र्यमुदाहरणमन्येषा-
म् ॥ १३ ॥ असँय्युक्तस्य मूर्द्धन्योष्मणः खोच्चारणं म-
तम् ॥ टुक्ते सँय्युक्तस्यापि कस्य योगे ष एव हि ॥१४॥
छन्दसीत्येव खोच्चारो लोके प्रकृतिरिष्यते ॥ अनु-
स्वारस्य ग्ंकार आदेशश्छन्दसि स्मृतः ॥ १५ ॥ ऊ-
ष्मरेफेषु परतस्तस्य द्वैविध्यमुच्यते ॥ ह्रस्वाद्दीर्घाद्दीर्घ-
ह्रस्वो गुरौ च परतो गुरुः ॥ १६ ॥ ऋकारपरऊष्मा-
न्त्ये दीर्घाद्दीर्घोऽपि जायते ॥ परसवर्णो ह्यनुस्वारस्ये-
षत्प्रकृतिरुच्यते ॥ १७ ॥ अणुमात्रमनुस्वारो ह्युत्त
मं चाणुमात्रकम् ॥ शषसे च कखपफे विसर्गाः सन्ति
यत्र च ॥ १८ ॥ वाचो विरामः कर्त्तव्यस्तत्रेषच्छ्रुतिचो-
दनात् ॥ सँय्युक्तस्य पदाद्यस्य चाकारस्य प्रतीयते ॥
१९ ॥ ईषद्दीर्घतयोच्चारः कात्यायनमुनेर्गिरा ॥ आस्ति-
कस्य मुनेर्वंशे जातो दैवज्ञगोकुलः ॥ २० ॥ तत्सुतेन
केशवेन कृता सम्यक् शुभार्थिनाम् ॥ प्रीत्यर्थं सुधियां
कारिकावली निर्म्मला शुभा ॥ २१ ॥ इति श्री आ-

स्तिकमहर्षिवंशोद्भवदैवज्ञगोकुलचन्द्रसुतदैवज्ञकेशव
मकृता कारिकावली सम्पूर्णा ॥

---

# अथ मल्लशर्म्मकृता शिक्षाऽऽरभ्यते ॥

नत्वा गणपतिं देवं ध्यात्वा श्रीकुलदेवताम् ॥ मल्लशर्म्मा ह्रस्वपूर्वां करोमि स्वरप्रक्रियाम् ॥ १ ॥ नत्वाविघ्नहरं सदा शुभकरं सर्वस्य कामप्रदं स्मृत्वा श्रीगुरुपादुकां सुललितां ध्यात्वा परां देवताम् ॥ वेदे वाजसनेयके त्वधिकृता विप्राश्च ये सत्तमास्तेषामेव कृते कृता न कुधियां ह्रस्वस्वरप्रक्रिया ॥ २ ॥ अथ साधारणनियमः, तथा प्रातिशाख्ये मनुः । ब्रह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वदा ॥ स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते ॥३॥ तथा उत्तानपाणिं फणवत्कृत्वा सह शलाकया ॥ गुरुं प्रणम्य मनसा ततः स्वाध्यायवान्भवेत् ॥४॥ अत्र जपादौ ह्रस्वस्वरवर्णहीनस्यानधिकारत्वं रावणेन स्वराङ्कुशे याज्ञवल्क्येन शिक्षायां च बोधितम् । तथा हि ह्रस्वहीनं तु योऽधीते ह्रस्वस्वर (१) विवर्ज्जितम् ॥ ऋग्यजुः सामभिर्दग्धो वियोनिमधिगच्छति ॥ ५ ॥ इति याज्ञवल्क्यशिक्षायां चोक्तम् । जपादौ नाधिकारोऽस्ति सम्यक् पाठमजानतः ॥ इत्युक्तं प्रातिशाख्ये । मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या-

(१) स्वरवर्ण इति 'ख' पुस्तकपाठः ॥

प्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ६ ॥ इत्यपि तत्रैवोक्तम् । एतेन हस्तस्वरवर्णयुक्त एव वेदोऽध्येतव्य इत्यतो हस्त-स्वरप्रक्रियोच्यते । तत्र तावद्धस्तस्वरस्य मूलस्थानं स्लो-केकेन कथ्यते । तथा । आदौ हस्तं न्यसेन्मध्ये स्थिति-रेषा सनातनी । ततः स्वरानुकूल्येन गतिस्तस्य न संशयः ॥ ७ ॥ इति मूलस्थानम् । अधस्तात्प्रव्रजन्पूर्वामू-र्द्धान्मध्ये च तिष्ठति ॥ मध्यतो दक्षिणं गच्छेद्दक्षिणाद्या-ति चोत्तरे ॥ ८ ॥ दृष्ट्वा जात्यस्वरं शीघ्रं मध्यतो याति चोत्तरम् ॥ उत्तराद्यात्यधो हस्तं स्वरं दृष्ट्वा च दक्षि-णे ॥ ९ ॥ अर्द्धन्युब्जे ततः पाणिरधस्ताद्याति दक्षि-णे ॥ सम्पूर्णे सत्यधो गच्छेदधस्ताच्च न संशयः ॥ १० ॥ सिंए ह्यसि प्रतीकं च ह्यवसानं विना करम् ॥ मध्य-तो याति सर्वत्र व्यूर्द्धमेव सुनिश्चितम् ॥ ११ ॥ अनु-दात्तसमूहो यान्वर्णानाश्रित्य तिष्ठति ॥ ते युक्तास्तं परित्यक्तुमशक्ता निजबन्धुवत् ॥ १२ ॥ स्वरितेऽप्येव-मेव स्याद्दक्षिणांसे विशेषतः ॥ न च पूर्वोक्तनियमो विद्यतेऽत्रेति निश्चितम् ॥ १३ ॥ प्रतीकेऽपि विशेषोक्तिर्म-न्यते वाऽनुवर्त्तिनम् ॥ १४ इति सामान्यविधिः ॥ ए-कारेण समा रेखा मूर्द्धि वर्णस्य या स्थिता ॥ तामगा-न्तां विजानीयादूर्ध्वगां व्यूर्द्धसंस्थिताम् ॥ १५ ॥ ति-

र्व्यग्रेखा च वर्णस्य पादपार्श्वे स्थिता तु या ॥ ऊर्द्ध्वरेखा-सहायेन तस्यास्तु स्यादधो गतिः ॥ १६ ॥ वामरेखा-सहायेन गतिस्तस्यास्तु दक्षिणे ॥ बिन्दोर्गतिश्च जात्य-द्वय मध्ये स्यादिति निश्चितम् ॥ १७ ॥ अर्द्धन्यव्जस्य पूर्णस्य दक्षिणः स्यात्त्वधोगतिः । इति चतुस्स्वरगतिः । पूर्णार्द्धन्युब्जजात्यानां सञ्ज्ञा सव्यक्रमेण हि । अङ्कैः पञ्चिश्चतुर्भिश्च स्वरविज्ञैरुदीरिता ॥ १८ ॥ इति पूर्णार्द्धन्युब्जजात्यानां सञ्ज्ञा ॥ अथ ह्रस्वस्वरगतिप्रमा-णम् ॥ षडङ्गुलिप्रमाणानि दक्षिणे च तथोत्तरे ॥ ऊर्ध्वे नवाङ्गुलिर्ज्ञेया गतिः पाणेरधस्तथा ॥ १९ ॥ वामे च दक्षिणाद्याति चार्द्धेऽधस्तात्तथैव च ॥ अष्टा-दशाङ्गुलिर्ज्ञेया गतिर्ह्रस्वस्य सुस्थिरा ॥ २० ॥ इति ह्रस्वस्वरगतिप्रमाणम् ॥ अथ विसर्गोच्चारणप्रमाणम् ॥ ह्रस्वाद्दीर्घाच्च परतो विसर्गश्चेत्तदा बुधः ॥ ह्रस्वस्व-रानुकूल्येनोच्चारयेत्तं सदा बुधैः ॥ २१ ॥ इति विस-र्गोच्चारणप्रमाणम् । अथाङ्गुलिनिस्सरणम् ॥ ह्रस्वे स्व-रितसँय्युक्ते वर्णे च सविसर्गके । कनिष्ठा तर्ज्जनी चैव निष्काश्या हि स्वयूथतः ॥ २२ ॥ दीर्घे स्वरितसम्प्रा-प्ते ह्येकामेव कनिष्ठिकाम् ॥ जात्ये युग्मं विशेषेण त्य-क्तव्यमिति निश्चितम् ॥ २३ ॥ स्वरितेभ्यः क्रमेणैव दक्षिणोत्तरगामिनी ॥ कनिष्ठा तर्ज्जनी चैव त्याज्या

प्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ६ ॥ इत्यपि तत्रैवोक्तम् । एतेन हस्तस्वरवर्णयुक्त एव वेदोऽध्येतव्य इत्यतो हस्त-स्वरप्रक्रियोच्यते । तत्र तावद्धस्तस्वरस्य मूलस्थानं श्लो-केकेन कथ्यते । तथा । आदौ हस्तं न्यसेन्मध्ये स्थिति-रेषा सनातनी । ततः स्वरानुकूल्येन गतिस्तस्य न संशयः ॥ ७ ॥ इति मूलस्थानम् । अधस्तात्प्रव्रजन्पूर्वामू-र्द्धान्मध्ये च तिष्ठति ॥ मध्यतो दक्षिणं गच्छेद्दक्षिणाद्या-ति चोत्तरे ॥ ८ ॥ दृष्ट्वा जात्यस्वरं शीघ्रं मध्यतो याति चोत्तरम् ॥ उत्तराद्यात्यधो हस्तं स्वरं दृष्ट्वा च दक्षि-णे ॥ ९ ॥ अर्द्धन्युब्जे ततः पाणिरधस्ताद्याति दक्षि-णे ॥ सम्पूर्णे सत्यधो गच्छेदधस्ताच्च न संशयः ॥ १० ॥ सिंह्यसि प्रतीकं च ह्यवसानं विना करम् ॥ मध्य-तो याति सर्वत्र व्यूर्द्धमेव सुनिश्चितम् ॥ ११ ॥ अनु-दात्तसमूहो यान्वर्णानाश्रित्य तिष्ठति ॥ ते युक्तास्तं परित्यक्तुमशक्ता निजबन्धुवत् ॥ १२ ॥ स्वरितेऽप्येव-मेव स्याद्दक्षिणांसे विशेषतः ॥ न च पूर्वोक्तनियमो विद्यतेऽत्रेति निश्चितम् ॥ १३ ॥ प्रतीकेऽपि विशेषोक्तिर्म-न्यते वाऽनुवर्त्तिनम् ॥ १४ इति सामान्यविधिः ॥ ए-कारेण समा रेखा मूर्द्धि वर्णस्य या स्थिता ॥ वामगा-न्तां विजानीयादूर्ध्वगां व्यूर्द्धसंस्थिताम् ॥ १५ ॥ ति-

र्य्यग्रेखा च वर्णस्य पादपार्श्वे स्थिता तु या ॥ ऊर्द्ध्वरेखा-
सहायेन तस्यास्तु स्यादधो गतिः ॥ १६ ॥ वामरेखा-
सहायेन गतिस्तस्यास्तु दक्षिणे ॥ बिन्दोर्गतिश्च जात्य-
द्वय मध्ये स्यादिति निश्चितम् ॥ १७ ॥ अर्द्धन्युब्जस्य
पूर्णस्य दक्षिणः स्यात्त्वधो गतिः । इति चतुस्स्वरगतिः ।
पूर्णार्द्धन्युब्जजात्यानां सञ्ज्ञा सव्यक्रमेण हि । अङ्कैः
षड्भिश्चतुर्भिश्च स्वरविद्भिरुदीरिता ॥ १८ ॥ इति पू-
र्णार्द्धन्युब्जजात्यानां सञ्ज्ञा ॥ अथ ह्रस्वस्वरगतिप्रमा-
णम् ॥ षडङ्गुलिप्रमाणानि दक्षिणे च तथोत्तरे ॥
ऊर्ध्वे नवाङ्गुलिर्ज्ञेया गतिः पाणेरधस्तथा ॥ १९ ॥
वामे च दक्षिणाद्याति चार्द्धेऽधस्तात्तथैव च ॥ अष्टा-
दशाङ्गुलिर्ज्ञेया गतिर्ह्रस्वस्य सुस्थिरा ॥ २० ॥ इति
ह्रस्वस्वरगतिप्रमाणम् ॥ अथ विसर्गोच्चारणप्रमाणम् ॥
ह्रस्वाद्दीर्घाच्च परतो विसर्गश्चेत्तदा बुधः ॥ ह्रस्वस्व-
रानुकूल्येनोच्चारयेत्तं सदा बुधैः ॥ २१ ॥ इति विस-
र्गोच्चारणप्रमाणम् । अथाङ्गुलिनिस्सरणम् ॥ ह्रस्वे स्व-
रितसंँय्युक्ते वर्णे च सविसर्गके । कनिष्ठा तर्ज्जनी चैव
निष्काश्या हि स्वयूथतः ॥ २२ ॥ दीर्घे स्वरितसम्प्रा-
प्ते ह्येकामेव कनिष्ठिकाम् ॥ जात्ये युग्मं विशेषेण त्य-
क्तव्यमिति निश्चितम् ॥ २३ ॥ स्वरितेभ्यः क्रमेणैव
दक्षिणोत्तरगामिनी ॥ कनिष्ठा तर्ज्जनी चैव त्याज्या

भङ्गं स्यादत्र मन्त्रेण वै रङ्गस्तु भवेदिति ॥ ४३ ॥ महाशब्दोऽतिशब्दश्च यद्वर्णात्प्राक् प्रवर्त्तते ॥ महारङ्गोऽतिरङ्गश्च सञ्ज्ञा तथैव निश्चिता ॥ ४४ अथ रङ्गादीनामुच्चारणे प्रमाणम्। ह्रस्वात्तु द्विगुणो दीर्घो दीर्घादेकगुणः प्लुतः ॥ प्लुतादेकगुणो रङ्गो रङ्गादेकगुणाधिकः ॥ ४५ ॥ महाशब्देन संयुक्तो व्यञ्जनं चार्द्धमात्रिकम् ॥ अतिरङ्गो महारङ्गाद्रङ्गो ह्येकगुणाऽधिकः ॥ ४६ ॥ एतत्तु किल वेदे वै ज्ञेयं पूर्णेऽपि सुस्थिरम् ॥ अथ द्विस्वरक्रमः ॥ द्विस्वरे स्वरहीनस्य गतिस्तूपरि चोत्तरे ॥ जात्ये लर्डे च सम्पूर्णे न्युब्जे चतुःस्वरेषु यत् ॥ ॥ ४७ ॥ स एव नियमो ह्येकैर्द्विस्वरेऽपि च दर्शितः ॥ भेदेनैव प्रकारस्तु (१) लिपिमात्रे सुनिश्चितः ॥ ४८ ॥ तिर्य्यग्रेखा द्विके मध्ये मध्ये वा तिर्य्यगूर्ध्वयोः ॥ उत्तरं याति सोर्ध्वञ्च विस्वरस्येत्क्रमेण हि ॥ ४९ ॥ अथौष्ठमकारस्थानानि ॥ म्रत्ने मिम्रातौ मोधे च मत्रं मध्यं मधौ मिधौ॥ रत्नोहणे च मन्त्रे तु बलं त्यक्त्वा मलेऽपि च ॥ ५० ॥ मिमन्थे च मिभर्त्तौ च मिभर्यौ समयेऽपिच ॥ औदुम्बर्य्यात्मके चैवं मत्नत्रणे म्नाम्नणे म्नपि ॥ ५१ ॥ माघोस्तु महिषं मध्यां (२)म्हन्ते च मधानके ॥ म्हस्पतौ च

---

(१) त्रिमात्रे इति 'ख' पुस्तकपाठः ॥

(२) माह्वीर्म्महिषम्माह्यमिति 'ख' पुस्तकपाठश्च ॥

पिमते स्टते मालवे मभूषते ॥ ५२ ॥ मिम्भाडिति प्रमुषे च मुषे मषौ प्रमाहके ॥ मम्लुषे मदरे म्नषे मपायो म्नह्मचर्य्यके ॥ ५३ ॥ मटे सोमे च मीभत्से क्लोमे नैय्यम्मकेऽपि च ॥ ग्रमले च मलाकायां सङ्ख्या सप्तविभक्तिषु ॥५४॥ स्थानेष्वेतेषु शिक्षायां याज्ञवल्क्येन भाषिता ॥ ५५ ॥ अथौष्ठमकारोत्पत्तिः ॥ मकारश्चौष्ठसञ्ज्ञः स्यान्मकारं बिन्दुगर्भकम् ॥ सर्वासामङ्गुलीनान्निस्सरणं कार्य्यमत्र वै ॥ ५६ ॥ अथ ठकारस्थानानि ॥ पृष्ठे गोष्ठे च शोचिष्ठेत्यनुष्ठाने च पिष्ठके ॥ अधिष्ठानेऽनधिष्ठाने स्वादिष्ठे च वसिष्ठके ॥ ५७ ॥ निविष्ठोष्ठत्रनिष्ठेषु कनिष्ठायां मदिष्ठके ॥ निष्ठायां चाप्यनिष्ठायां मजाविष्ठां च षष्ठके ॥ ५८ ॥ प्रतिष्ठायां यविष्ठ्यं च वर्षिष्ठे तिष्ठतेऽपि च ॥ आपोष्ठि यजिष्ठे च नेदिष्ठस्त्विष्ठिनेऽपि च ॥ ५९ ॥ निष्ठीवने चाखरेष्ठः पुञ्जिष्ठे गह्वरेष्ठके ॥ ज्येष्ठे श्रेष्ठे कनिष्ठे च भूयिष्ठायान्तु पिष्ठके ॥ ६० ॥ नरिष्ठायां गरिष्ठे च म्राजिष्ठेऽष्टविभक्तिषु ॥ सप्तस्वेव यथा प्रोक्ताः सूरिभिः शब्ददर्शिभिः ॥ ६१ ॥ इति ष्ठकारस्थानानि ॥ यस्सुबोधात्पठेन्नित्यमिमां च स्वरप्रक्रियाम् ॥ हस्तपूर्वां तु तस्यैव सम्यग्वेदे गतिर्भवेत् ॥ ६२ ॥ श्रीमता कान्यकुब्जेन ह्युपमन्युवंशिनहोत्रिणा ॥

भङ्गं स्याद्यत्र मन्त्रेण वै रङ्गस्तु भवेदिति ।
महाशब्दोऽतिशब्दश्च यद्वर्णात्प्राक् प्रवर्त्तते
रङ्गोऽतिरङ्गस्य सञ्ज्ञा तस्यैव निश्चिता ॥ ४
ङ्गादीनामुच्चारणे प्रमाणम् । ह्रस्वात्तु द्विगुणो
र्घादेकगुणः प्लुतः ॥ प्लुतादेकगुणो रङ्गो र
णाधिकः ॥ ४५ ॥ महाशब्देन सँयुक्तो व्यञ्
मात्रिकम् ॥ अतिरङ्गो महारङ्गाद्वृद्धो ह्येकः
कः ॥ ४६ ॥ एतत्तु किल वेदे वै ज्ञेयं पूर
स्थिरम् ॥ अथ द्विस्वरक्रमः ॥ द्विस्वरे स
गतिस्तूपरि चोत्तरे ॥ जात्ये त्वद्वै च सम्पू
चतुस्स्वरेषु यत् ॥ ॥ ४७ ॥ स एव नि
कैर्द्विस्वरेऽपि च दर्शितः ॥ भेदेनैव प्रका
लिपिमात्रे सुनिश्चितः ॥ ४८ ॥ तिर्य्यग्रेखा
ध्ये मध्ये वा तिर्य्यगूर्ध्वयोः ॥ उत्तरं याति
विस्वरस्येत्क्रमेण हि ॥ ४९ ॥ अथोष्ठमकारस
न्त्ने मिभ्रातौ मोधे च मत्रं मधयं मधौ मिर
ह्णं च मन्त्रे तु बलं त्यक्त्वा मलेऽपि च ॥ ५
मन्वे च मिभर्त्तौ च मिभर्यौ मभयेऽपिच ॥
य्यौत्मके चैवं मन्त्राह्णो मार्ह्णो स्टपे ॥ ५१ ॥
मह्मिषं मध्यां (२)स्टह्न्ले च मधानके ॥ स्टह

(१) त्रिमात्रे इति 'ख' पुस्तकपाठः ॥
(२) [illegible] 'ख' पुस्तकपाठश्च ॥

पिमते क्ष्ते मालवे सभूषते ।। ५२ ।। मिश्राड्डिति
प्रमुषे च सुप्ने मष्नौ प्रमाष्टके ।। मम्लुशे मदरे म्नषे
मपायो म्नह्माचर्य्यके ।। ५३ ।। मटे सोमे च मीभ-
त्से क्षोमे त्रैय्यम्बकेऽपि च ।। शमले च मलाकायां स-
ञ्ज्ञा सप्तविभक्तिषु ।।५४।। स्थानेष्वेतेषु शिक्षायां या-
ज्ञवल्क्येन भाषिता ।। ५५ ।। अथौष्ठमकारोत्पत्तिः ।।
मकारश्चौष्ठसञ्ज्ञः स्यान्मकारं बिन्दुगर्भकम् ।। सर्वा-
सामाङ्गुलीनान्निस्सरणं कार्य्यमत्र वै ।। ५६ ।। अथ
ठकारस्थानानि ।। पृष्ठे गोष्ठे च शोचिष्ठत्यनुष्ठाने च
पिष्ठके ।। अधिष्ठानेऽनधिष्ठाने स्वादिष्ठे च वसिष्ठ-
के ।। ५७ ।। निविष्ठोष्ठत्रनिष्ठेषु कनिष्ठायां मदिष्ठके ।।
निष्ठायां चाप्यनिष्ठायां मजाविष्ठां च षष्ठके ।। ५८ ।।
प्रतिष्ठायां यविष्ठ्यं च वर्षिष्ठे तिष्ठतेऽपि च ।। आपो
ह्यिष्ठे यजिष्ठे च नेदिष्ठस्तिष्ठिनेऽपि च ।। ५९ ।। नि-
ष्ठीवने चाखरेष्ठः पुञ्जिष्ठे गह्वरेष्ठके ।। ज्येष्ठे श्रेष्ठे
कनिष्ठे च भूयिष्ठायान्तु पिष्ठके ।। ६० ।। नरिष्ठायां
गरिष्ठे च भ्राजिष्ठेऽष्टविभक्तिषु ।। सप्तस्वेव यथा
प्रोक्ताः सूरिभिः शब्ददर्शिभिः ।। ६१ ।। इति ष्ठका-
रस्थानानि ।। यस्सुबोधाम्पठेन्नित्यमिमां च स्वरप्र-
क्रियाम् ।। हस्तपूर्वां तु तस्यैव सम्यग्वेदे गतिर्भवेत् ।।
६२ ।। श्रीमता कान्यकुब्जेन ह्युपमन्युवंशिनाग्निहोत्रिणा ।।

श्रीमद्वेदस्वरूपाणां श्रीमद्वाक्पतिशर्म्मणाम् ॥ ६३ ॥ सूनुना पितृभक्तेन मल्लविप्रेण धीमता ॥ विक्रमार्क-गताब्देषु चन्द्रवस्वगभूमिषु ॥ ६४ ॥ ऊर्ज्जमासे सि-ते पक्षे ह्येकादश्यां शनेर्द्दिने ॥ कृतेयं बालबोधाय स्व-रूस्तस्वरप्रक्रिया ॥ ६५ ॥ इति श्रीमत्कान्यकुब्जो-योपमन्युगोत्रीयाग्निहोत्रिखगपतितनूजपितृभक्तघाटम पुरवासिमल्लशर्म्मकृता शिक्षा समाप्ता ॥

# अथ स्वराङ्कुशशिक्षाऽऽरभ्यते ॥

हेरम्बं चण्डिकां नत्वा शम्भुं सूर्य्यं हरिं गुरुम् ॥ सरस्वतीं कविवरान्वक्ष्येऽहं स्वरनिर्णयम् ॥ १ ॥ उदात्तान्निहतः स्वारः स्वरितात्प्रचयो भवेत् ॥ उदात्तात्स्वरितात्पूर्व्वो नान्यमापद्यते स्वरम् ॥ २ ॥ व्यञ्जनैस्तु यवौ यत्र प्रयुज्येते ततः परम् ॥ अपूर्वौ नीचपूर्वौ वा जात्यः स्वारः स उच्यते ॥ ३ ॥ एदोतोरुच्चयोर्य्यत्र नीचोऽकारः परो यदि ॥ एकीभावे भवेत्तत्र स्वारोऽभिनिहितस्तदा ॥ ४ ॥ इ उ वर्णौ यदोदात्तावापद्येते यवौ क्वचित् ॥ अनुदात्तस्वरे नित्यं विद्यात्क्षैप्रस्य लक्षणम् ॥ ५ ॥ इकार उच्चः पूर्व्वस्मिन्परस्मिन्नियतः स च ॥ प्रश्लिष्टमाङ्कराचार्याः स्वरवर्णविदस्तदा ॥ ६ ॥ कम्पन्ते ते च चत्वारः स्वरितोच्चोदयाः स्वराः ॥ एतत्सम्यक्प्रकारेण ज्ञात्वाऽसौ कम्पविद्भवेत् ॥ ७ ॥ नीचेन स्वरितः स्वारमेकीभावेऽनुगच्छति ॥ नीचं नीचस्त्रिभिश्चोच्च उच्चत्वमभिगच्छति ॥ ८ ॥ उदात्तात्स्वरितादस्य स्वरितोदात्तवच्छ्रुतिः ॥ प्रकृत्या निहितं चाङ्कराचार्य्याः स्वरवित्तमाः ॥ ९ ॥ उदात्तपूर्व्वं यत्किञ्चिच्छन्दसि स्वरितं भवेत् ॥ एष सर्वबह्वृस्वारस्तैरोव्य-

ञ्जन एव च ॥ १० ॥ अवग्रहात्परं यत्र स्वरितस्स्या-
दनन्तरः ॥ तैरोविरामं तं विद्यादुदात्तो यद्यवग्रहः ॥
११ ॥ स्वरे चेत्स्वरितं यत्र विवृत्त्या तत्र संयुतम् ॥
एतत्तु पादवृत्तस्य लक्षणं शास्त्रनिश्चितम् ॥ १२ ॥
जात्यस्वारः स जात्येन ब्रुष्ट्यग्ने क्षैप्रउच्यते ॥ तेऽव-
र्द्धन्ताऽभिनिहितः प्रश्लिष्टो ह्यीन्द्र गिर्वणः ॥ १३ ॥ तै-
रोविरामो विष्कभिते तैरोव्यञ्जन उतये ॥ पाद-
वृत्तस्य विद्यात्तु ताऽअस्येति निदर्शनम् ॥ १४ ॥ जा-
त्योऽभिनिहितः क्षैप्रस्तैरोव्यञ्जन एव च ॥ तिरो-
विरामः प्रश्लिष्टः पादवृत्तस्तु सप्तमः ॥ १५ ॥ यत्रा-
भिनिहितात्पूर्वो ह्युदात्तो दृश्यते यदि ॥ तत्र स्वा-
रं न कुर्वीत रथानां नेति दर्शनम् ॥ १६ ॥ एका-
क्षरसमावेशे पूर्वयोः स्वरितः स्वरः ॥ तस्योदात्ततरो-
दात्तादर्द्धमात्रार्द्धमेव वा ॥ १७ ॥ स्वरात्परं व्यञ्जनं य-
त्पञ्चमेनान्वितं यदि ॥ पूर्वस्य स्वरतो नादो न पूर्वं-
स्वरते स्वरः १८ ॥ यत्र स्वरात्परो नादः पूर्वस्वरि-
तभाक्परः ॥ तत्राक्षेपो न कर्त्तव्यो नादे अङ्घेऽ-
पि तत्परे ॥ १९ ॥ स्वरितस्यानुरूपेण कम्पं कुर्वीत
शास्त्रवित् ॥ ह्रस्वे ह्रस्वं विजानीयाद्दीर्घे दीर्घं तथैव
च ॥ २० ॥ स्वरितान्नियतं गच्छेत्स्वरितो नियत-
श्च नौ ॥ द्विमात्रो यत्र दृश्येत ह्रस्वकम्पः स उच्यते ॥

२१ ॥ अनुदात्तं क्रमात्कुर्य्यात्स्वरितं ह्यवलम्बयेत् ॥ पुनर्नियतमागच्छेद्दीर्घकम्पः स उच्यते ॥ २२ ॥ जयन्तस्वामिना प्रोक्ताः श्लोकानामेकविंशतिः ॥ स्वराङ्कुशेति विख्याता बह्वृचां स्वरसिद्धये ॥ २३ ॥ एकोदात्तं पदं विद्यादेकस्वारमथापरम् ॥ कानि चोदत्ताुदात्तानि कनिष्ठं निहितं स्मृतम् ॥ २४ ॥ उदात्तान्निहितः स्वार्य्यः स्वारोदात्तौ न चेत्परौ ॥ स्वरितौ यस्तथा भूतो ज्ञेयः सप्ताक्षतीस्त्विति ॥ इति श्री जयन्तस्वामिप्रोक्ता स्वराङ्कुशा शिक्षा समाप्ता (१)

(१) केवल रावणकृता स्वराङ्कुशा शिक्षा मतिपाद्यन्ते ॥

स्वौ ग्लौ दीर्घश्च गुरुस्तथा ॥ १० ॥ इति व्यञ्जभेदाः ॥
इकुविसर्ज्जनीयानां स्यात्कण्ठ्यं यिसु तालुकम् ॥ ऋटु-
कं ऌतुला दन्त्यमूपध्मानीयमोष्ठजम् ॥ ११ ॥ वो दन्तो-
ष्ठं ञमस्यापि नासिकायमयुग्युरः ॥ ओदौतोरपि क-
ण्ठोष्ठं ऎदैतोः कण्ठतालुकम् ॥ १२ ॥ जिह्वामूली-
यमानस्य जिह्वामूलं हि चाष्टमम् ॥ सद्यो बोधकरा
शिक्षा मणिभूता प्रकाशिता ॥ १३ करालो न च ल-
म्बोष्ठो नाव्यक्तो नानुनासिकः ॥ गद्गदो बद्धजिह्वश्च प्र-
योगान्वक्तुमर्हति ॥ १४ ॥ व्याघ्री दद्भिर्हरेत्पुत्रान्भीता
पाताच्च पीडनात् ॥ तद्वत्प्रयोजयेद्वर्णांस्तेन लोके म-
हीयते ॥ १५ ॥ इति वर्णोच्चारः ॥ शिवास्यान्निसृतां
शिक्षां प्रयतो यः पठेदिह ॥ पुत्रकीर्तिधनायु-
ष्मान्स्वर्गंःतिसुखमश्नुते ॥ १६ ॥ इति रामकृष्णवि-
रचिता षोडशश्लोकी शिक्षा समाप्ता ॥

---

# अथातोऽवसाननिर्णयं व्या-
# ख्यास्यामः ॥

---

नमस्कृत्य तु तं देवं शङ्करस्य सुतं प्रभुम् ॥ यस्य
प्रसादाद्देवस्य बुद्धिभेदोऽत्यभून्मम ॥ १ ॥ अवसानन्तु
वक्ष्यामि यथा वदनुपूर्वशः ॥ २ ॥ इषे त्वा भूताय
कृष्टोऽसि जनयत्यै त्वा मा भेः पृथिवि देवयजन्यदि-
त्यै व्युन्दनमस्कन्नमद्याग्ने व्रतग्नेऽदब्धायो दिवि वि-
ष्णुरग्ने व्रतपतेऽम्बस्त्वैष ते रुद्र भागः स्वाहा पृश्नि-
मेष ते गायत्री व्रकणस्योत्तम्भनमग्नेस्तनूः सिंह्य-
सीन्द्रघोषस्त्वा सिंह्यसि ध्रुवोऽसि रक्षोहणांवलगह-
नं स्वराडसि रक्षोहणो वो मित्रस्य मा देवीरापो
व्याचन्ते समुद्रङ्गच्छ मनो मे तर्पयत स्वाङ्कृतोऽस्युप-
यामगृहीतोऽस्याग्रयणः सोमः पवते मित्रावरुणा-
भ्यान्त्वाऽऽत्मने मे मधवे त्वाऽग्नये त्वा मह्यं युक्तेऽश्म-
श्रुसनिरग्नये त्वा गायत्रच्छन्दसं वेश्रीनान्त्वोश्रि-
वक्षान्देवान्द्विवमापये स्वाहाऽग्निरेकाक्षरेण मित्रो
वसवस्त्रयोदशाक्षरेणैष ते ये देवा ऽआविर्मर्य्योऽज-
ह्वीभारोहाग्निः पृथुः सवित्रा प्रसवित्रा पृथिव्याः
सधस्थाद्वसवस्त्वोभयोरदितिष्ट्वा वसवस्त्वाऽऽकूतिम-
ग्निम् ॥ ३ ॥ विष्णोः क्रमश्चिद्रस्यपान्त्वाऽयस्पुरः

पञ्च सजूर्ऋतुभिरनड्वान्वयोराड्यस्यायुर्म्मे पृथिवीच्छ-
न्दोऽग्निर्द्देवताऽऽशुस्त्रिवृत्पञ्चविंशꣳ शक्वर्य्यास्तुवताच्छच्छ-
न्दस्तन्तुना रायस्त्रिवृदसि राड्यसि व्विराडसि सम्रा-
डसि स्वराडस्यधिपत्न्यसि सहस्रस्य प्रमा सेनान्यऽ-
ग्रामण्यौ गन्धर्वे शम्भवाय पर्य्यायेमा मे नृषदे वेद्वाजश्च
सप्तविꣳशतिः समुद्रोऽसि स्वर्ग्य घर्म्मस्तेजोऽसि प्र-
थमा द्वितीयैरश्मिभ्यस्त्वा होता यक्षत्समिधाग्नि-
म्हाद्याश्विनौ सरस्वतीन्द्रन्त्वाग्नोऽग्निꣳ स्विष्टकृत-
न्देवोऽअग्निः स्विष्टकृत्त्वामद्याग्नये स्वाहा हिङ्का-
राय यते कायाऽऽब्रह्मन्नध्यायान्तस्ताऽभावस्युरस्तू-
परोऽध्यायान्तः शादन्दद्भिर्न्नवाग्नेयः कृष्णग्रीवस्त्रिस्त्रो
ब्रह्मणे मात्स्यꣳ सप्तदश सुमित्रिया नः सुमित्रिया
नः सुमित्रिया नःऽएधोऽसीति द्वे शते चतुस्त्रिꣳ
शदित्यन्त्यावसानानि ॥ ४ ॥ अथ व्यवसानानि ।
युञ्जाऽइन्द्रोऽग्ने ब्रह्म सँव्वपामि पुरा क्रूरस्य सवि
तुस्त्वा गन्धर्वस्त्वोपह्वतो द्यौरेषा ते व्वसुभ्यस्त्वा व्वि-
दोऽस्यग्निर्ज्योतिः सꣳहिताऽस्युपह्वताऽइहैदं देऽ-
ग्राकूत्यै प्रयुजऽऊर्गसि द्वे त्वमग्नेऽभित्यमदित्यास्त्वा
भद्रो मे तप्सायनो मे देवस्य त्वोभयोरुद्दिवमन्त-
न्त्यावृतिनाम्नौ मनसाऽइदमापऽऐन्द्रः प्राणो माऽपो-
ऽग्नेर्व्वः सोम राजन्निन्द्रवायूऽइमेऽअयँव्वाँप्यावाङ्गा

तमप्रत्नथाऽयव्वेनो ध्रुवोऽसि कोऽसीन्द्राग्नी ऽआगतं
पञ्च सजोषाऽइन्द्र चतस्रो व्विवस्वन्नादित्य बृहस्प-
तिसुतस्यैजतु दशमास्यऽआतिष्ठ तिस्रऽउदुत्त्यँव्वि नऽ-
इन्द्रेति तिस्रऽइह रतिः ॥ ५ ॥ ध्रुवसदन्त्वा ग्रहा-
ऽऊर्ज्जोऽकृतयऽइन्द्रस्य व्वज्रो यवो यस्तेऽआ मा व्वा-
जस्याऽस्मे वः क्षत्रस्योल्बं प्रपर्व्वतस्य प्रजापते ना-
ग्निःभ्याम्पच्यस्व कुविदङ्ग पुरीष्योऽसृतठं० सप्य-
सुखाङ्कणोत्त्वदित्यै रास्नास्यूर्ज्जो भवाग्निर्म्मूर्द्धा म-
धुश्चेमं मा हि शुक्रश्च व्विश्वकर्म्मोभयोर्न्नभश्चे
षश्च षोडशी स्तोमोऽग्निठं० होतारमग्ने त्वं तप-
श्च परमेष्ठी त्वोभयोर्न्नमोऽस्तु तिस्रऽआयुर्य्यज्ञेन
ऽक्टचो नाम ॥ ६ ॥ स्वाद्वीन्त्वा कुविदङ्ग यदा पिपे-
षेद्ठं० हवीरेतो मूत्रं हष्ट्वा रूपे निषसाद नाभिर्म्मे
त्रया देवा यदापोऽअश्विनौ च्छागस्य प्रजापतये
त्वाऽग्निः पशुः प्राणाय स्वाहेमा नु कन्देऽअग्निश्चा-
घैतानष्टौ यङ्क्रन्दमोऽआ सुते कुतस्त्वमधि नो दस्रा
युवाकवो दैव्यावध्वर्य्यूऽअश्वेदिन्द्रो ब्रह्मणस्पते ऽअ-
पेतः स्योना पृथिवि भूर्भुवोऽहानि शन्ते हठं० ह
यमाय त्वाऽनाधृष्टा पुरस्ताद्विश्वासां भुवां पते यस्ते
स्तनो गायत्रीच्छन्दः समुद्राय त्वाऽभीमं पयसो रेतः
स्वाहा प्राणेभ्यो लोमभ्यः स्वाहेति शतमेकचत्वारिठं०

ग्रदित्येतानि त्र्यवसानानि ॥ ७ ॥ अथ चतुरवसाना-
नि प्रत्युष्टꣳ रक्षोऽग्नीषोमयोरुज्जितिꣳ सजूर्दे-
वेनेन्द्राणाग्ना त्र्यम्बकँय्यजामहेऽꣳशुरꣳशुष्टे या
ते धामान्युश्मसि देवस्य त्वाऽग्नीषोमाभ्यां मरु-
त्वन्तं वृषभं माहिर्भूरग्ने पवस्वोत्तिष्ठन्नोजसाऽदृश्रम-
स्य केतवो युवन्तं देवस्याऽहञ्ज्योतिष्मन्तं प्रैतु सुप-
र्णोऽसि विराड्ज्योतिरिमꣳ साहस्रं तिस्रो वा-
योः पून पुनन्तु मा पितरऽएधोऽसि सँव्वत्सरोऽस्य-
ग्निमहृद्योभयोरिन्द्रस्यौजस्यऽस्जवे त्वा स्वाहा रुद्र-
द्राय हिरण्मयेन पात्रेणेति द्वात्रिꣳशदित्येतानि चतु-
वसानानि ॥ ८ ॥ कृष्णोऽसि नमो वऽउशिगसि स-
मुद्रोऽसि मधुमतीर्नऽइषः प्राणाय परमेष्ठ्यभि-
धीतऽइन्द्रश्च प्रोह्यमाणः सोमो विश्वे देवा द्वेऽग्र-
ग्निरेकाक्षरेण पूषा पञ्चाक्षरेण मित्रो नवाक्षरेण
वृष्णऽऊर्मिरस्येतस्यावेष्टा दन्दशूका दक्षिणामारो-
ह प्रतीचीमुदीचीमूर्ध्वां व्वयो मा छन्दोऽग्नेर्भा-
गोऽसि व्वसूनाँय्यवानामेकया स्तुवत नवभिर्नवदश-
भिः ॥ ९ ॥ एवश्छन्दोऽरश्मिना सत्याय प्रतिपदसि
नमो हिरण्यबाहवे बभ्लुशाय रोहिताय कृत्स्नायत-
योष्णीषिणे व्विसृजद्भ्यः सभाभ्यो गणेभ्यस्तक्षभ्यः
श्वभ्यः कपर्दिने ह्रस्वाय ज्येष्ठाय सोभ्याय वन्याय

त्विल्मिने स्तुत्याय कूप्याय व्यात्याय पाय्यीय सिक-
श्याय अज्ज्याय शुष्क्व्याय प्रथममग्निमद्य स्वपरत्या-
ऽश्वयेति षट्पञ्चाशदित्येतानि निरवसानानि ॥१०॥
अथ मध्यावसानानि ॥ द्वितीयठं० अश्मोस्यग्ने व्याज
जिह्विभूरस्यादद्दे रावाऽसि द्वे मध्यऽइन्द्राय त्वा बृहद्द्व-
ते पञ्चेति मध्यावसानानि ॥ ११ ॥ अथ पञ्चावसा-
नानि ॥ प्रैतु व्वायुरनिलन्द्वे पञ्चावसाने ॥ १२ ॥ अ-
थ षडवसानानि ॥ या तेऽअग्नेऽयःशया या ते घर्मो
द्वे षडवसाने ॥ १३ ॥ अथ नवावसानानि ॥ मखस्य शि-
रोऽश्वस्य त्वा द्वे नवावसाने ॥ १४ ॥ अथ मर्या-
दा ॥ शतानि चतुर्दश त्रिनवतिर्द्व्यवसानानि १४९३
भवन्ति ॥ द्वे शते त्रयस्त्रिठं०शदन्त्यावसानानि २३३
भवन्ति ॥ शतं पञ्चाशत्त्र्यवसानानि १५० भवन्ति ॥
त्रिठं०शच्चतुरवसानानि ३२ भवन्ति ॥ षट्पञ्चाश-
न्निरवसानानि ५६ भवन्ति ॥ पञ्च मध्यावसानानि ५
भवन्ति ॥ द्वे पञ्चावसाने ५ द्वे षडवसाने २ द्वे नवा-
वसाने भवतः ॥ सर्वाण्यवसानान्येकीकृत्यैकानविठं०
शतिः शतानि पञ्चसप्ततिः सङ्ख्या कण्डिकायास्त्वा-
रिठं०शदध्याये १९७५ ॥ इत्यनन्तदेवविरचिताऽव-
साननिर्णयशिक्षा समाप्ता ॥ रसवेदाङ्केन्दुमिते १९४६

फाल्गुने शुक्लपक्षके ॥ पूर्णिमायां गुरोर्वारेऽवसा-
नान्यङ्कितानि वै ॥ १ ॥

---

# अथ कात्यायनमहर्षिप्रणीतस्वरभक्तिलक्षणपरिशिष्टशिक्षाऽऽरभ्यते ॥

---

अथातः सम्प्रवक्ष्यामि सर्वलक्षणलक्षिताम् ॥ शिक्षां समासतस्तत्र स्वरास्त्वष्टौ प्रकीर्त्तिताः ॥ १ ॥ तैरोविरामः क्षैप्रश्च तैरोव्यञ्जनकस्तथा ॥ भाव्योऽभिनिहितो जात्यः पादवृत्तश्च सप्तमः ॥ २ ॥ प्रश्लिष्टइति विज्ञेयाः प्रोच्यन्ते लक्षणान्यथ ॥ अवग्रहउदात्तश्चेत्स्वरितः स्यात्ततः परम् ॥ ३ ॥ अवग्रहात्परं यत्तु तं विद्यात्प्रथमं स्वरम् ॥ लक्ष्यमस्य तु विज्ञेयं गोपताविति गो । पतौ ॥ ४ ॥ इकारोकारयोः स्थाने यवौ स्यातामुदात्तयोः ॥ अनुदात्ते पदे नित्यं स क्षिप्रइति कीर्त्तितः ॥ ५ ॥ त्र्यम्बकं ह्यत्र इत्यादि लक्ष्यं ज्ञेयं विचक्षणैः ॥ स्वरितं छन्दसि पदं यत्किञ्चिदपि दृश्यते ॥ ६ ॥ उदात्तपूर्वं तत्सर्वं तैरोव्यञ्जनउच्यते ॥ इडे रन्ते तथा हव्ये काम्ये इत्यादि दर्शनम् ॥ ७ ॥ अकारएकोदात्तेन रेफेणापहृतो भवेत् ॥ तञ्चाभिनिहितं प्राहुः कुक्कुटोऽसि निदर्शनम् ॥ ८ ॥ विवृत्त्या दृश्यते यत्र स्वरं च स्वरिते पदे ॥ सस्वरः पादवृत्तः स्यात्पुत्रऽईधे निदर्शनम् ॥ ९ ॥ यत्रोदात्त इकारो हि

निपातैकारसंयुतः ॥ स प्रश्लिष्टइति ज्ञेयोऽभीममित्या-
दि दर्शनम् ॥ १० ॥ सादौ पदे परे पूर्वं ककारान्ते
पदे स्थिते ॥ कसवर्णं तु विज्ञेयं भिषक्सोमेन दर्शन-
म् ॥ ११ ॥ चकारान्ते पदे तान्ते पूर्वं च समवस्थिते ॥
प्रत्यारम्भो न तत्र स्याद्यच्चाहमिति दर्शनम् ॥ १२ ॥
सादौ पदे परे पूर्वं ङकारान्ते पदे सति ॥ कसवर्ण-
द्वयं तत्र प्राङ् क्सोमइति दर्शनम् ॥ १३ ॥ सादौ प-
दे परे नान्ते पूर्वं च समवस्थिते ॥ तसवर्णं विजा-
नीयात्त्रीन्त्समुद्रान्निदर्शनम् ॥ १४ ॥ मादौ पदे प-
रे मान्ते पूर्वमुच्चारिते सति ॥ मसवर्णन्तु तत्र स्या-
द्दिमम्मइति दर्शनम् ॥ १५ ॥ पदमध्ये पदाद्यन्तेऽन्तरे-
रेफैश्च संयुते ॥ यकारे जं विजानीयाद्युञ्जानेत्यादिकं
यथा ॥ १६ ॥ टवर्गमन्तरा षस्य खोच्चारश्छन्दसीरि-
तः ॥ प्रत्युदाहरणं षष्टो द्विषे त्वा निदर्शनम् ॥
१७ ॥ ऋष्वोर्ध्वरेफयोश्चारः सैकारो ह्रल्युता न चेत् ॥
पितॄणामिह पित्रेणामित्यादि च निदर्शनम् ॥ १८ ॥
ॐकारः स्यादनुस्वारस्थाने शलि च रे परे ॥ ह्रस्वा-
द्दीर्घो भवेद्दीर्घाद्ह्रस्वो गुरुरथो मतः ॥ १९ ॥ सँय्योगे
परतो हॐसइत्यादि निदर्शनम् ॥ ताॐ सवितुरित्यादि
दॐष्ट्रेत्यादिकं तथा ॥ २० ॥ ह्रस्वदीर्घगुरूच्चारः कर्त्त-
व्योऽत्र यथा क्रमम् ॥ शल् रेफयोरभावेन सिॐही

प्रत्युदाहृतिः ॥ २१ ॥ शरेः परे यानु दिती द्विर्भवे-द्रेफभागिनाम् ॥ विसर्गाच्च परे यां ऋकारहीनां नि-दर्शनम् ॥ २२ ॥ अस्कन्नमद्य कस्याश्चित्कृष्णोऽस्या इ-ति च क्रमात् ॥ सूर्यस्त्वा वौषिष्मता चाथ दधान्व-स्मानिति क्रमात् ॥ २३ ॥ वृहन्तः प्रस्तरेष्ठेति पु-नः कक्रत्वे निदर्शनम् ॥ पाणिनीयस्य सूत्राभ्यां द्वित्वं सर्वत्र कीर्त्तितम् ॥ २४ ॥ यवयोः परयोः सस्य द्वित्वं न स्यात्तु छन्दसि ॥ व्यसवस्त्वा धूपयन्तु तस्य योनिं यथायथम् ॥ २५ ॥ हृल्युतात्ऋकारस्तु रेकारश्छन्द-सि स्मृतः ॥ पितृणामिति पित्रेणामित्यादि च निदर्श-नम् ॥ २६ ॥ ह्रस्वं दीर्घं भवेत्किञ्चित्संहिताविषये स्वके ॥ ह्लिवसर्गयुते वर्णे ह्लुतायुतके च न ॥ २७ ॥ सपक्षान्यद्ममरध्न्येति किञ्चिद्दीर्घो भवेदिह ॥ भागम्प्रजावतीत्यादौ ह्रस्वता न तु दीर्घता ॥ २८ ॥ ह्लुताकारसँयोगादिति ज्ञेयं विचक्षणैः ॥ इति का-त्यायनपरिशिष्टे वर्णोच्चारप्रकारः ॥ सन्धयश्चतुर्धा विज्ञे-या लोपागमविकारतः ॥ २९ ॥ प्रकृत्या च तथा तत्र प्रथमं हि निदर्शनम् ॥ विकारतो यथा चेदं प्रे-षितेत्यादिकं भवेत् ॥ ३० ॥ देवो वः सवितेत्यादौ प्रकृत्यादिप्रदर्शनम् ॥ उभौ स्वरौ तयोरन्तः सन्धिर्यत्र न दृश्यते ॥ ३१ ॥ सा विवृत्तिर्बुधैर्ज्ञेया स एवेति

च पश्यति ॥ एषा चतुर्द्धा विज्ञेया प्रथमा तु पिपीलि-
का ॥ ३२ ॥ परा पाकवती चैव तथा वत्सानुसारि-
णी । वत्सानुसृप्जिता चैव चतस्रस्ता विद्वत्तयः ॥ ३३ ॥
पिपीलिकाऽऽद्यन्तदीर्घा नाव्याऽश्वासीन्निदर्शनम् ॥
द्वितीया तूभया ह्रस्वा व्विनऽइन्द्रेति दर्शनम् ॥ ३४ ॥
तृतीया चोदिता दीर्घा ताऽअक्षेति निदर्शनम् ॥ अन्ते
चतुर्थी दीर्घा स्यात्तानऽआवोढमश्विना ॥ ३५ ॥
स्वरभक्तिः पञ्चधा स्यात्तत्राद्या करिणी स्मृता ॥ रका-
रेण हकारेण सँय्योगो यत्र दृश्यते ॥ ३६ ॥ करिणी
सा तु विज्ञेया बर्हिरसीति दर्शनम् ॥ लकारेण ह-
कारेण सँय्योगो यत्र दृश्यते ॥ ३७ ॥ कुर्विणी सा
हि विज्ञेया उपवल्हेति पश्यति ॥ रकारस्य शकारेण
सँय्योगो यत्र दृश्यते ॥ ३८ ॥ हरिणी सा तु विज्ञेया-
ऽर्शसऽइत्यादि दर्शनम् ॥ लकारेण शकारेण सँय्योगो
यत्र जायते ॥ ३९ ॥ तां हरिणीं विजानीयाच्छतवल्शे-
ति दर्शनम् ॥ रेफस्याथ षकारेण सँय्योगो यत्र दृश्यते ॥
४० ॥ हंसपादेति विज्ञेया व्वर्षो व्वर्षीयसीति च ॥ एत-
ल्लक्षणमाख्यातं स्वरभक्तेर्विचक्षणैः ॥ ४१ ॥ ज्ञात्वैतन्म-
नुजो याति ब्रह्मलोकं सनातनम् ॥ इति कात्याय-
नेनैव परिशिष्टं कृतं मुदा ॥ ४२ ॥ इति कात्यायनो-
क्ता स्वरभक्तिलक्षणपरिशिष्टशिक्षा समाप्ता ॥

# अथ क्रमसन्धानशिक्षाऽऽरभ्यते ॥

---

यथा समाम्नातङ्क्रमावसानर्ठ॰ सङ्क्रमेषु ॥ क्र-
मशास्त्रानुसारेण सन्धानं प्रोच्यतेऽधुना ॥ १ ॥ वि-
श्वधाः परमेण । १ । ह्वार्षीच्छ्रतधारम् । २ । सह-
स्रधारन्देवः । ३ । अधुक्षः सा । ४ । विश्वधायाऽइ-
न्द्रस्य । ५ । राध्यतामिदम् । ६ । एमि कः । ७ । त-
स्मै कर्म्मणे । ८ । व्वारुप्रत्युष्टम् । ९ । अरातयऽउ-
रु । १० । एमि धूः । ११ । धूर्व्वमो देवानाम् ।
१२ । देवहूतममहुतम् । १३ । हविद्धानँ व्विष्णुः ।
१४ । हस्ताभ्यामग्नये । १५ । गृह्णामि भूताय ।
१६ । रश्मिभिर्द्दैवीः । १७ । देवयुवँय्युष्माः । १८ ।
स्याग्नये । १९ । अग्नीषोमाभ्यां दैव्याय । २० ।
व्वेत्वद्द्रिः । २१ । व्वेत्वाग्नेः । २२ । धामीष्व्वहविः-
ष्कृत् । २३ । इहि कुक्कुटः । २४ । व्वह द्दध्रुवम् । २५ ।
बधायाग्ने । २६ । अन्तरिक्षन्धर्त्तम् । २७ । दि-
वँव्विश्वाभ्यः । २८ । ठवेत्तु धान्यम् । २९ । व्यानाय
दीर्घाम् । ३० । रसेन रेवतीः । ३१ । एतच्चयन्ता-
ञ्जनयत्यै । ३२ । बधः पृथिवि । ३३ मौगप । ३४ ।
बध्यासमरो । ३५ । स्कन्गायत्रेण । ३६ । जाग-

तेन सुब्ध्वा । ३७ । माउर्म्यै निम्रिता । ३८ । माउर्ध्यं-दिव्यै । ३९ । पश्चात्प्रत्यग्ने: । ४० । यजुषेयजुषे सवि-तु: । ४१ । त्वा तेज: । ४२ । इति द्विचत्वारिंशत्प्र-थमाध्याये ॥ पतये गन्धर्व्व: । १ । ईडितऽइन्द्रस्य।२। दक्षिणो मित्रावरुणौ । ३ । अभित्रस्त्यै सवितु: । ४ । ध्रुवा ध्रुवा । ५ । मार्ज्जि नम: । ६ । सचन्तामस्मा-कम् । ७ । अश्नन्नात्प्येतम् । ८ । ब्रह्मणे तेन । ९ । जहात्प्यग्नीषोमौ । १० । जहामीन्द्राग्न्यो: । ११ । इन्द्राग्न्योरिन्द्राग्नी । १२ । इन्द्राग्नी व्वसुभ्य: । १३ । अवताँऽव्यन्तु । १४ । मरुद्भिरिन्द्र: । १५ । तस्मै पोषाय । १६ । व्वर्त्तेग्ने । १७ । ह्विमाऽअचारिष-म् । १८ । व्वेदिषदो ये । १९ । इत्येकोनविंशति-र्द्वितीयाध्याये ॥ २ ॥ उषसा सूर्य्य: । १ । गृहप-ते पुरीष्य: । २ । पतिवेदनमित: । ३ । इति त्री-णि क्रमासन्धानानि तृतीयाध्याये ॥ ३ ॥ चतुर्थे क्र-मसन्धानाभाव: ॥ ४ ॥ पुरूरवा मन्थामि । १ । र-ज:शया च्छ्रिश्रया । २ । देववीतये सिष्ह्वि । ३ । ध्रुवो व्वैष्णवम् । ४ । ध्रुवऽऐन्द्रम् । ५ । हव्यवाहन: स्वात्त्र: । ६ । अभूद्यथायथम् । ७ । इति सप्त पञ्च-माध्याये ॥ ५ ॥ षष्टाध्याये क्रमसन्धानाभाव: ॥ ६ ॥ मादयस्वोदानाय । १ । भून्महेन्द्राय । २ । इति द्वे

क्रमसन्धाने सप्तमाध्याये ॥ ७ ॥ अष्टमाध्याये क्रमसन्धानाभावः ॥ ८ ॥ इन्द्रस्य सत्यप्रसवः । १ । इन्द्रँ त्वा जजितः । २ । इति द्वे क्रमसन्धाने नवमाध्याये ॥ ९ ॥ दशमाध्याये क्रमसन्धानाभावः ॥ १० ॥ जागतेन हस्ते । १ । हिरण्ययीमानुष्टुभेन । २ । इति द्वे क्रमसन्धाने एकादशाध्याये ॥ ११ ॥ परिचिल्लोकम् । १ । इत्येकं क्रमसन्धानं द्वादशाध्याये ॥ १२ ॥ द्विपासि साहस्रम् । १ । गवयमूर्णायुम् । २ । उष्ट्रमजः । ३ । शरभत्वम् । ४ । इति चत्वारि क्रमसन्धानानि त्रयोदशाध्याये ॥ १३ ॥ अन्तरिक्षँ वायुः । १ । वायुराज्ञी । २ । बृहती नभः । ३ । इति त्रीणि क्रमसन्धानानि चतुर्दशाध्याये ॥ १४ ॥ अग्नेरेवः । १ । रथेचित्री मेनका । २ । असमरथः प्रम्लोचन्ती । ३ । अरिष्टनेमिर्विश्वाची । ४ । सुषेणाऽउर्वशी । ५ । शैशिरौ परमेष्ठी । ६ । दिवः सूर्य्यः । ७ । दिवं ध्रुवे । ८ । इत्यष्टौ पञ्चदशाध्याये ॥ १५ ॥ षोडशसप्तदशाध्यायौ क्रमसन्धानरहितौ स्तः ॥ १६ ॥ १७ ॥ स्वस्तोमः । १ । रथन्तरँ त्वेट् । २ । इति द्वे क्रमसन्धानेऽष्टादशाध्याये । एकोनविंशतिमाध्याये क्रमसन्धानाभावः ॥ १९ ॥ वायुज्योग्भत् । १ । स्वमि सूर्य्यः । २ । स्रुद्धेऽर्य्यो । ३ । आपोऽयच्चि । ४ ।

इति चत्वारि क्रमसन्धानानि विंशतिमाध्याये ॥ २० ॥ एकविंशतिमाध्याये क्रमसन्धानाभावः ॥ २१ ॥ स्वा-हाकृतः स्वगा । १ । प्राणाय युक्ते । २ । इति द्वे द्वाविंशाध्याये ॥ २२ ॥ चतुष्पदश्चन्द्रमाः । १ । च-न्द्रमा रात्रौ । २ । व्वायुः सूर्य्यः । इति त्रीणि क्रम-सन्धानानि त्रयोविंशाध्याये ॥ २३ ॥ चतुर्विंशतिपञ्च-विंशतिषड्विंशतिसप्तविंशतिमाध्यायेषु क्रमसन्धाना-भावः ॥ २४ । २५ । २६ । २७ ॥ शुचिसुच्छिद्रा । १ । द्वैवी त्रिष्टुभा । २ । इति द्वे क्रमसन्धानेऽष्टा-विंशाध्याये ॥ २८ ॥ एकोनत्रिंशत्त्रिंशदेकत्रिंशद्वात्रिंश-त्त्रयस्त्रिंशच्चतुस्त्रिंशत्पञ्चत्रिंशदध्यायेषु क्रमसन्धाना-भावः ॥ २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ ॥ ऊतिभिः कया । १ । ईत्त्वऽईशामहे ॥ २ ॥ इति द्वे क्रम-सन्धाने षड्त्रिंशदध्याये ॥ ३६ ॥ पाहि मधु । १ । स्वाहा रात्रिः । २ । इति द्वे सप्तत्रिंशदध्याये ॥ ३७ ॥ सरस्वत्यसौ । १ । इत्येकमष्टत्रिंशाध्याये ॥ ३८ ॥ ए-कोनचत्वारिंशाध्याये क्रमसन्धानाभावः ॥ ३९ ॥ अ-विद्याँव्विद्यश्चयाम् । १ । ओं ३ क्रतो । स्मर क्लिबे । क्लिबे स्मतम् ॥ ४० ॥ इति चत्वारि चत्वारिंशाध्याये ॥ इति पञ्चदशाधिकैकशतं क्रमसन्धानानि । ११५ । एथ्वी-

ऽन्यत्र संहितानुसारेण निर्णयः ॥ इति क्रमसन्धान-
शिक्षा समाप्ता ॥

---

# अथ गलदृक्शिक्षाऽऽरभ्यते ॥

इषे त्वाऽश्वस्तूपरः समिद्धोऽअञ्जन्त्सहस्रशीर्षा पुरुषस्तदेव स्वाहा प्राणेभ्यस्त्येतेष्वध्यायेषु न गलिता ऋचः। द्वितीयेऽध्यायेऽग्ने व्रतपतऽइति पश्चात्प्रविष्टाऽतस्त्रयस्त्रिꣳशत्। तृतीयेऽध्यायेऽयमग्निः पुरीष्य इति प्रविष्टाऽतो द्विषष्टिः। पञ्चमेऽध्यायेऽग्ने व्रतपास्त्व प्रविष्टोरु विष्णो गतोऽतएकचत्वारिꣳशत्। षष्ठेऽध्याये प्रथमा ऋग्गलिता, रेवतीरमध्वमित्यत्र देवस्य त्वा एवं पञ्चत्रिꣳशत्। वाचस्पतय इत्यत्र स्वाङ्कृतोऽसि आत्मने मे सम्पृक्तो। अयन्नोऽग्नेनय लुप्तत्वाच्चतुश्चत्वारिꣳशत्। आदित्येभ्यस्त्वेत्यत्र कदा चन सँव्वर्चसा युग्देवा गातुविदऽउदुत्यमवभृथनिचुम्पुणोशिक्तं गलिते सप्त षट्पञ्चाशत्। देव सवितरित्यत्र देवस्याहमेकोनचत्वारिꣳशत्। अपो देवाऽइत्यत्र सोमस्य त्विषिरिसं देवा लुप्ता द्वात्रिꣳशत्। युञ्जान इत्यत्र युञ्जते मनो विश्वो देवस्य देव सवितः पृथिव्याः सधस्थादसवस्त्वाछृन्दन्तु मिलिताष्टाशीतिः। दृशानऽइत्यत्र हꣳसः शुचिषदक्रन्ददग्निर्दृशानो रुक्मः समिधाग्निं पुनरूर्जा सह-

रय्याऽयन्ते भवतन्नऽइति मिलिता अष्टोत्तरशतम् ।
मयि गृह्णाम्यग्निर्मूर्द्धा प्रविष्टाऽअपाम्पृष्ठं मही द्यौर्व्वि
श्वोः कर्म्माणि चित्रन्देवानां त्रिपञ्चाशत् । ध्रुवक्षितिः
शुक्रस्य व्विश्वकर्म्मा त्वा द्वे नभश्चेषस्य राड्यसि मि-
लितं सहस्य षड्त्रिठ० शत् । अग्ने जातानग्निर्मूर्द्धा
त्वामग्ने पुष्करादधि भुवो यज्ञस्यायमिहाग्ने त्वमय-
न्ते लोकम्पृण ताऽअस्येन्द्रं विश्वा न चैता लुप्यन्ति प-
रमेष्ठी त्वा द्वौ मिलित्वा चतुः पञ्चाशत् । नमोऽस्तु
नीलग्रीवाय नमोऽस्तु रुद्रेभ्यो द्वौ मिलित्वाऽत्रि-
षष्टिः । अश्मन्नूर्ज्जठ० हिमस्य त्वा व्वाचस्पतिं वि-
श्वकर्म्मन्हविषोद्रु त्वेंद्रं व्विश्वा नक्तोषासाऽग्ने तठ० स-
प्तनवतिः । व्वाजस्य देवस्य त्वा व्वाजस्य नु यास्ते यावऽ-
उद्बुध्यस्व येन व्वहसि व्विनस्त्वँय्यविष्ठैकोनसप्ततिः ।
स्वाद्वीन्त्वा व्वायोः पूतः कुविदङ्ग त्रिणवतिः । क्षत्रस्य
योनिः समुद्रे तऽउपयामगृहीतोऽसि पुत्रमिव नि-
षसाद यदि जाग्रद्यदापो यदि दिवा यवेन्द्रस्य युवठ०
सुराममिति नवतिः । इममग्ने तन्त्वा शम्नो व्वाजेवाजे-
ऽवत होता यक्षदिन्द्रस्यपभस्येति सरस्वतीमेषस्येति
प्रविष्टाः सप्तपञ्चाशत् । तेजोऽसि तत्सवितुर्विश्वो दे-
वस्य पृथिव्यै स्वाहा मधवे स्वाहा व्वाजाय स्वाहाऽ-
सवे स्वाहेति प्रविष्टा एकोनविंठ० शतिः । हिरण्य-

गर्ब्भः कुविदङ्ग कः स्विदासीत् सूर्य्यऽएकाकी का स्विदासीद्द्यौरा-शसीदुपयामगृहीतोऽसि सप्तपञ्चाशत्। शादन्दद्भिर्हिरण्यगर्ब्भो यः प्राणतोऽग्ने त्वञ्चतुश्चत्वारिंशत्। अग्निश्च व्वैश्वानरो नः पञ्चविंशतिः। समास्त्वोद्द्वयञ्चतुश्चत्वारिंशत्। होता यक्षद्देवा दैव्या शुचिमुषिद्दानन्तरं सर्वोऽनः पञ्चविंशत्। देव सवितस्तत्सवितुर्विंशत्। अस्या जरासो युञ्जा ह्ययमिह मूर्द्धानन्दिवऽउदुत्यँव्विश्वेऽअद्येन्द्र वायू यज्ञो देवानां गावऽउप दैव्यावध्वर्य्यूऽअद्ब्येभिः सप्ताशीतिः। यज्जाग्रतऽआकृष्णेन सप्तपञ्चाशत्। अपेतोऽश्वत्थे वः सुमित्रिया नऽउद्द्वयमग्नऽआयूंषि ह्यष्टादश। ऋचँव्वाचम्भूर्भुवः कया नः कस्त्वा स्योना पृथिवि आपो हिष्ठेतितिस्रो नमस्ते हरसे सुमित्रिया नोऽभीषुणो दृते दृंह त्रयोदश। देवस्य त्वा देवी द्यावा पृथिवीऽइन्द्रस्यौजोऽश्वस्य त्वा वृजवे त्वयस्यग्रे प्रविष्टास्त्रयो हृदे त्वा युञ्जते मनः प्रैतु मखस्य शिरस्त्रयोदश। देवस्य त्वा सुमित्रिया नऽउद्वयमेधोऽसीडऽएह्यदित्यै रास्नासीन्द्राय त्वा षड्विंशत्। ईशा व्वास्यमन्धन्तमोऽन्यदेव सम्भूतिं च विद्यां तास्त्रयोऽग्नेनय त्रयोदश। एवं चतुष्षष्टिऋचो विज्ञेया एकादशोत्तरशतानि ऋचोऽधिकाश्च॥ एवं कृते

ष्टतिशतान्यपि सङ्ख्यकाश्च प्रोक्ताः समार्य्यैः खलु का-
ण्डिकाश्च ॥ १ ॥ इति लुप्तकर्सङ्ख्यात्मिका शिक्षा
समाप्ता ॥

---

# अथ मनःस्वारशिक्षाऽऽरभ्यते ॥

---

मनःस्वारं प्रवक्ष्यामि ब्रह्मणा निर्मितं पुरा ॥ भग-
वान्याज्ञवल्क्येन भाषितँल्लोकहेतवे ॥ १ ॥ अथ त्रि-
पदा द्विरवसानमध्येऽनुदात्तानि । अथाधिमध्येऽनुदा-
त्तानि भवन्ति । कस्त्वा राजन्तमध्वराणां स नः पितेव
मा नः परि ते प्रागपाक् प्रणो मरुतो यस्य योगे योगे
तवस्तरं तस्माऽअरन्द्र नः परस्या ऽअधि पुनरूर्ज्जा स-
मितमग्ने यत्ते शुक्रं तुभ्यन्ता मयि गृह्णामि मधु व्वाता
मधुमान्नोऽग्ने युक्ष्व त्वँ य्यविष्ठाग्ने पावक स नः पावका
व्वार्त्रहत्याय शवसे पवमानः सस्तानऽआवोढं चित्रभा-
नो धियेषितः । आ नो मित्रावरुणाजीजनो ह्यग्ने
पत्नीः स यज्ञस्तव व्वायो व्विश्वानि देव हरयो धूम-
केतवो व्विश्वेभिः सोम्यँ य्येना पावक यद्द्य कच्च व्वरु-
णः प्रावितोपस्तदग्ने व्वृत्रहन्द्रमिन्द्रो विश्वस्य शन्नो
देवीर्हते दर्ठ०ह मा स्वाहा मरुद्भिः पञ्चचत्वारि-
ठं० शत् ॥ १ ॥ अथ त्रिपदा द्विरनुदात्ता । प्रयासिनो
हवामहे व्वयठं० सोमान्तर्य्यच्छ मही द्यौः सह रय्या-
ऽग्निः प्रियेषु समुद्रस्य त्वा वयं शुक्रज्ज्योतिश्चेह-
ङ्च व्वैश्वानरो नः पावका नः सुनावमारुहेयन्दे-

वस्य चेततो रातिꣳ सत्पतिं देवस्य सवितुरुपह्वरे गिरीणामुत्रा ते द्रविणो दाः पिपीषति व्विभक्तारꣳ हवामहऽउभा पिबतꣳ हृदे त्वा द्याविꣳ शतिः । २ । अथ त्रिपदाद्यन्ता मध्येऽनुदात्तानि । अग्ने व्रतपते सुसमिद्धाय वयं सनो नु पुनर्न्नऽउदुत्यं तमुत्वा पाथ्यो वृषाऽऽपो हि ष्ठाऽयमग्नेऽभ्यावर्त्तिन्नग्ने वाजस्य येनासमत्स्वग्ने तमद्य नमस्ते रुद्र सम्राट् स्वजास्यग्नऽआयूꣳष्यन्वर्य्योऽअद्भिर्गोभिर्मद्रपुणा सख्या तूतुजानः स हव्यवाट् स नऽइन्द्राय सख्या युक्ष्मच्छ्राय तेऽअस्य वायो ये ते व्वनस्पतेऽव कक्षा सत्यस्मादसस्पतिं गावऽउपेन्द्रस्तुपास्माऽइन्द्राण्याऽउष्णीषोऽश्विना घर्म्ममपातामश्विनैकोनचत्वारिꣳ शत् । ३ । अथ त्रिपदाऽऽद्यानुदात्तानि । स्वयम्भूरस्यग्नये कव्यवाहनाय समिधाग्निं त्रिꣳ शद्धामास्य प्रत्नान्न हि तेषाँय्युद्धा हि देव च्छपो राजन्भद्राऽउतैर्भिर्न्नो व्वीतꣳ हविष्मत्यां देवानां फेनेन ज्ञातस्य योनिर्द्धीनावन्तं कारस्मिन्नश्विनक्षतस्य ते महोऽअर्णाऽइमग्ने सुष्टुतिꣳ सुमतीवृधो युञ्जन्त्यस्यैना व्विश्वान्यभि यज्ञं केतुङ्कृण्वन्नग्निर्न्नचाणि बृहन्निद्धिध्मो मित्रꣳ ऊर्ध्वऽउग्रा विघनिना सविता ते शरीरे हे व्वायुः पुना तु स्योना पृथिव्येकत्रिꣳ शत् । ४ । अथ त्रि-

पदा मध्योदात्तान्यन्तस्थरत्यग्निर्मूर्द्धा महि त्रीणा-
मिदं विष्णुर्विष्णोः कर्म्माणि मित्रस्य चर्षणीधृतो वि
श्वच्यद्भमषाढाऽसि सऽइधानो भद्रो नऽइष्टो ऽग्न-
ग्निः पुनाति ते यत्ते पवित्रं चोदयित्री सूनृतानां
तनूनपादसुरो द्वारो देवीरग्ने स्वाहा वायुरग्रे-
गाऽअभीषुणो यदद्य सूरऽउदिते विश्वेभिरुप नः पूष-
न्नव धर्त्ता दिवस्तुर्विंशतिः । ५ । अथ त्रिपदा
अन्त्योदात्तानि वीतिहोत्रन्त्वोपप्रयन्तोऽअध्वरं सो-
मानं स्वरणं यो देवाना नऽएतु युञ्जाथां रासभ-
न्त्वसुत्वा सोरायुञ्जन्त्याप्यायस्व समेतु ते महिन्त-
मं मधुनक्तमयमग्निः सहस्रिणऽइतजिद्धऽनृतस्य स्व-
तवांश्च दिवो मूर्द्धा हिरण्यपाणिमूतयेऽग्निन्दूतं यु-
ञ्जन्ति ब्रध्नं कस्त्वाऽऽच्छ्यति स्वादिष्ठया तिस्रो
देवीर्बर्हिरिदं नियुत्वान्वा कया नश्चित्र स्तरणिर्विश्वद-
र्शतऽइन्द्रवायू बृहस्पतिमिमे सुतास्तद्विप्रासः प्रजा-
पतौ त्वऽत्रच वाचमेकत्रिंशत् । ६ । अथ त्रिपदामध्ये
अन्तोदात्तानि भेषजमस्यद्धोऽअस्य काव्ययो राजानेषु
देवी द्यावापृथिवी देव्यो वम्म्यऽइयरथग्ने षट् । ७ ।
अथ त्रिपदा कम्पः । प्रत्युष्टं रक्षो द्विकं रेवतीर-
मद्धं निषसादाग्निस्तिग्मेन पयः पृथिव्यां नारिरस्याद-
देऽदित्यै रास्नासि । ८ । अथ त्रिपदा जात्यः । क-

स्त्वा विमुञ्चति तद्विष्णोर्य्युक्तेन मनसेन्द्रस्य स्यूरास्व-
ग्नेऽथाह्यग्ने प्रेद्धोऽअग्ने कोऽसि बाहू मे स्वयँव्वाजि-
न्दैव्या होताराऽऊर्द्ध्वमध्वरमस्माज्वमेकादश ।९। अ-
थ त्रिपदामध्ये तकारान्ता आपवस्व परिव्राजपतिराते
वत्सो मनो देवहूर्य्यज्ञो मधयान्ते पवित्रेण पुनीहि य-
ज्ञा नः षट् । १० । अथ त्रिपदान्ते तकारान्ताः ।
आधत्तेडऽएहि तत्सवितुरभ्यावर्त्तस्वाग्निं स्तोमेन र-
क्षोहा विश्वचर्षणिः सप्त । ११ । अथ त्रिपदाम-
ध्ये नकारान्ताः । अग्निर्ज्ज्योतिषोऽस्कभ्याऽअव क-
या त्वं तीणि । १२ । अथ त्रिपदान्ते नकारान्ताः ।
ऊर्ज्जँव्वहन्ति तीणि पदा द्वयम् । १३ । अथत्रिपदा-
न्तरा आद्युदात्ता । आऽय,न्ते हि,मा सु, न यदाऽऽहा-
नि पञ्च । १४ । अथ चतुष्पदा द्विरवसाना मध्येऽनुदा-
त्ताऽन्यथादिमध्योदात्तानि भवन्ति । सा विश्वायुः श्र-
म्मासि मनो जूतिर्य्यम्परिधिं समर्हिरत पितरऽआऽग-
न्ता गृहा माऽग्ने त्वठं॰ सु, अनु त्वा माता व्वस्यसि
समख्ये परि मा प्रति पन्थां सूर्य्यस्य चक्षुर्भवतन्नऽआप-
तये त्वा सन्ते कार्षिरसि यत्ते सोम त्वमङ्गाऽऽवायो
मनो न देवा गातुविदो देवी रापऽएष वो गर्भो, यस्यै-
ते व्वातो वा बृहस्पते व्वाजँव्वाजस्य न्वग्नेऽअच्छ सू-
र्य्यत्वचसस्थऽइन्द्रस्य व्वज्रऽइयदस्यन्वग्निस्त्वमग्ने

द्द्युभिः सन्ते व्वायुर्व्यदग्ने यदत्ति ये जनेषु योऽअस्म-
व्व्यमन्नपतेऽन्नस्य व्विश्वा रूपाण्यग्नेऽअङ्गिरऽउद्दुत्त
मँय्यस्तेऽअद्य त्वामग्ने यजमाना ऽउद्दुत्त्वा गर्भोऽअ-
सि पुनरासद्य सँय्याँव्यस्यास्ते कामङ्कामदुघे यत्तौष-
धीरुच्छुष्मा यस्यौषधीर्य्याः फलिनीरोषधयः सन्वाङ्क-
न्वर्वो मा सेषमूर्ज्जन्नमोऽस्तु सर्प्पेभ्यो याऽइषवो ये
वा यस्ते यावन्तोन्त्समुद्रानजस्त्रमिन्दुँभ्योऽअग्निर-
ग्नेस्त्वामग्ने अऽङ्गिरसः सखायः सठं० सोऽअग्निर्व्ये
नऽऋषयो नमोऽस्तु नीलग्रीवाय या ते हेति रमी न-
स्तोकेऽसङ्ख्याता सहस्राणि नीलग्रीवाः शितिकण्ठा
दिवँय्ये वृक्षेषु ये भूतानाँय्ये पथाँय्ये तीर्त्थानिव्यश्मन्नू-
र्ज्जँयऽइमा ऽअवस्तूष्ट्वापरोद्धर्षय यत्र बाणा व्वाजो नस्त्र-
यठं० कवन्नस्त्वा याव्येतावद्रूपँय्यजुर्भिराप्यन्ते ये
समाना द्वे स्रुतीऽउदीरतामङ्गिरसो नो ये नः पूर्व्वे
त्वठं० सोमाच्च्या जानु सरस्वती मनसाऽङ्गान्याक्ल-
न्क्षिरो मे नराशठं० सः प्राति आनऽइन्द्रो हरिभि-
रिन्द्रः सुत्रामा स्ववाँस्तस्य व्वयमामन्द्रैर्गोभिर्न्न यऽइन्द्रे
ता नासत्त्या त्वष्टा तुरीपो व्वनस्पतिमभि यः प्राण
तो द्विपदा या दैव्याऽअद्वर्य्यवः किँस्विद्वस्था स्व-
र्य्यसमँय्यन्निर्णिजोपप्रागात्सुमद्यद्श्वस्य यत्ते गात्रा-
द्ध्ये व्वाजिनं चतुस्त्रिठं० शाद्वाजिनो युदाहिष्टँव्वा-

यो शुक्रस्तनूनपातमूतिभिर्व्वर्हिषीन्द्रमिन्द्रꣳ स्वाहा
प्रचेतसा देवानाꣳ स्वाहाकृतिरग्निर्न्त्वष्टा व्वीरमसि
युमः समिद्धोऽअद्य तनूनपात्पथो धन्वना गाऽआज-
ह्वन्नीन्द्रस्य व्वज्रो मरुता मनोकमाक्रन्दय तस्मा-
द्यज्ञात्तस्मादश्वा यो देवेभ्यस्तदेव स नो बन्धु-
र्य्योमेधाव्हे विरूपेऽअग्ने शर्द्ध प्रवो महे स्वायन्तऽइव
सूर्य्यँ ये त्वा जनिष्ठाऽउग्रोऽनुतेऽदब्धेभिः प्रवीरया
ब्रह्माणि मेऽनुत्तमा तऽऋधगित्था येन कर्म्माणि नयं
त्वमग्ने प्रथमऽइडायास्त्वा हिरण्यपाणिः सविता ये
ते भगप्रणेतरोना सख्या यदा बध्नन्त्विष्टापापघꣳ
शन्नो व्वातो द्यौः शान्तिरर्थतो यतो, गर्भो देवानाꣳ
समग्निरग्निनाऽहः केतुनेडऽएहि स्वाहा पूष्णे चतुः
स्तोम्नीभिस्तपसे स्वाहा शतमेकाशीत्येकन्यूनम् ।
१५ । अथ चतुष्पदा ह्यनुदात्तानि गायत्रेण त्वा स-
मिद्दशुभावाम्पूर्णा दर्व्वि देहि मे मह्नीनाम्पयः शुक्र-
न्त्वाऽग्नेर्ज्जनित्रमुरु विष्णो ह्यꣳ हविष्मतीरिमा
रुद्रे त्वा व्वाचस्पतये सुवीरो व्वीरान्त्सुप्रजाः प्र-
जा ब्राह्मणमद्य व्वामसह्यापाꣳरसमेषा वऽउत
क्षेमन्देवाः स्योनाऽसि युवꣳ सुराममागत्य व्वाजी
प्रसहृद्य भस्मना सजूरब्दः साकँय्यक्ष्म द्रापसम्स्कन्द
कृणुष्व पाजऽइषे राये ज्ञाणेऽएना वऽउक्षे सुसन्दृ-

पो ह्विष्ठाऽवतस्य धनुर्ऋतवस्त्योऽपामिदं गोत्रभिदं
गोविदमस्माकमिन्द्रोऽमीषां चित्तꣳ सप्त ते सप्तुद्-
द्रा दूर्म्मिरेताऽअर्षन्ति समव्यक्स्रवन्ति सह दानुमपुरु-
हूत क्षगो न दृष्टो दिव्यꣳश्याम तं देवा यज्ञन्धीचायै
रूपमातिष्ठ्यरूपं ग्रैवेभिः प्रैषानर्द्धऽरूचैरूक्थानाम-
भिग्रह्यां प्रातः सवनं पुनन्तु सोमान्त्वा द्वधा परि-
स्रुतः दृष्टीर्म्मे द्रुपदादिव मुमुचानोऽꣳशुना ते
प्राणाय मे तिस्रस्त्रेधऽऋतुथेन्द्रो मह्रीमृपु सुबर्हिर-
ग्निनक्षे यह्वी तिस्रऽइडा शमिता नो देवीऽऊर्ज्जा-
हुती देवा देवानां देवबर्हिर्व्वारितीनाँव्वायुश्वा
कृविदङ्गऽऋतवस्यऽऋतुथाऽर्द्धमासाः परूꣳषि पृच्छा-
मि त्वा परमियꣳव्वेदिर्द्देवानाम्भद्राः स्वस्ति नः प्रत-
मिदेव च्छागऽऋतवस्ते यज्ञमिद्धैवाग्ने देवा दैव्यो-
षासा नक्ताइति चतस्रऽएता उव ऽइन्मान्तासो बह्वीनां
पिता तीव्रान्घोषान्दिवः पृथिव्याः परीत्य भूतानि से-
धाम्नऽआतिष्ठन्तम् परी माऽ उ त्वाऽयꣳ सहस्रमु-
त्तानायामव प्रातरग्निस्तुतेदानीमायासाय स्वाहा प्र-
तमेकाधिकम् । १६ । अथ चतुष्पदाद्युदात्तमध्येऽनु-
दात्तानि भवन्ति । भूरसि धृष्टिरसि मर्यादमग्ने गृह-
पतेऽक्रन्कर्माऽदित्यास्त्वा नमो मित्रस्याग्ने व्रतपाः
परि त्वा गिर्व्वणो गिरो रेवतीरमद्वन्माऽहिर्भूर्म्मा

ऽग्ना ३ इ पत्नीवन्त्याँ २ ॥ ऽआवह यज्ञयज्ञं देव स-
वितर्वीतरꣳ हा भव वाजे वाजेऽवत सोमꣳ रा
जानमग्ने सहस्व सोमस्य त्वाऽऽत्वा जिघर्मि परि त्वा
ऽग्ने सीद होतः सुजातो विभ्राजसाऽहरहरप्रयावँ
विश्वस्य केतुरसाव्यग्निरिन्द्रँविश्वाऽसुन्वन्तमयज-
मानमोषधीरितीष्कृतिर्नामाग्ने तव श्रवो वयो भुवो
यज्ञस्य विश्ववस्मै प्राणाय काण्डात्काण्डात्परोहन्त्य-
दित्या त्वाऽबोध्यग्निर्जनस्य गोपास्त्वाम्निवश्ववस्तस्मा-
ऽऽवाचऽउद्बुद्ध्य नमस्तऽआयुधाय मीढुष्टम शिवत-
मनमस्त्वे हरसे यो देवानां चक्षुषः पिता बृहस्पते प-
रीन्द्रऽआसामग्रेत सकमीणि तऽउद्देशं दैव्याय धर्त्रे
क्रमद्ध्मभिजिना वाजाय स्वाहा विश्वस्य मूर्द्धन्नन्त्का
यनँव्या व्याग्घं सोमस्य रूपं यमश्विना यद्द्न त्वया
हि नोऽग्निष्वात्ताः पितरऽआसीनासोऽअरुणीनां वे-
देन रूपे सरस्वती योन्त्यां तेजः पशूनाँ लोमानि प्र-
यतिहैँव्याभिमाना वरुणः चनँव्यास्मिन्नश्वासः स-
मिद्धोऽअग्निर्द्दुरो देवीर्य्यद्देवासो यद्धरिणी हय-
न्तार्यस्ते केष्वन्तः कत्यस्यानो भद्रा यद्वद्धाम् मा त्वा-
ऽग्निर्यद्दश्वाय यत्ते सादे तँवस्तवायमेकया च न
त्वावान्त्समिधेन्द्रमिडाभिरिन्द्रन्दैव्या होतारा त्वष्टा
रमिन्द्रं समिधानस्महत्तनूपातमुद्भिदमीडेऽन्यमीडितं

च्यवस्वती: सुप्रायणा: सुपेशसा सुशिल्पे पेशस्वती
शिताम: समिद्धोऽअञ्जन्कृदयोऽश्वोपप्रागात्परममा सुब्र-
ह्मणो दैव्या होतारा प्रथमा सुवाचाऽऽनो यज्ञमा-
वती ब्राह्मणास: पितरोऽहिरिव भोगै: धीश्चतेऽग्ने
विश्वेषामदितिस्त्वष्टुरर्यस्य तन्निवस्य वरामहानम-
ऽकृत्तमिन्द्रायातमुप प्रवऽइन्द्राय यज्ञाग्रतोऽनुनो-
ऽद्य सिनीवालि पृथुष्टुकऽआरात्रि समद्भवाय कल्प-
न्तामग्नऽआयुष्मानग्ने परीमऽइन्द्राय त्वा घर्मैतन्मनस
कानां त्रिंशत्यधिकमेकशतम् । १७ । अथ चतुष्पदा-
ऽऽनुदात्तमध्येऽनुदात्तानि । अग्नेस्तनूरेतन्ते कदा
चनायमग्निरेतन्ते शिवो नाम चित्पतिर्माऽच्छवाम-
र्थो: शिल्पे प्रजाना: मोताऽएषा तेऽग्ना वग्निर्युञ्जते म-
नोऽश्वोरसि घृतस्तपावान: प्रजानाम्स्थ राया
ऽयंयज्ञो देवानां सुगर्भोऽसि हरिरसि पुरुदस्मो
विषुरूप: सनद्य ऽऽदिर्यज्ञस्य दोहो देवस्याहमेभ-
स्थार्थं मयाबृहस्पतिं सविता त्वा पुत्रमिव पितराव-
पात्यष्टं रुद्रा: सर्ठं० सृज्य देवस्त्वा घृतेन सीता शतं-
धारऽस्वावतीं सोमावतीमश्वावोऽव पतन्त्रीरवदन्ना-
श्यिनी बलासस्थेरुज्यन्मग्ने ध्रुवाऽस्यूचे त्वाऽऽदि-
त्यगर्भमग्निमात्माऽम्येऽसौ यस्मान्न: सहस्राणि स-
हस्रशः पावकया यो व्यावस्पतिस्परी दिवा सङ्क्र-

न्द्रेनाभिषेणोचा समुद्रो ऽविधेम तऽइमᳬ स्तनं
चत्वारि शृङ्गाऽऋताषाडृतधामा षडिष्टो यज्ञऽएतत्त्वा-
नाथ ऽव्रयन्तो हविर्द्धानँय्यद्धानाः करम्भो धानानाᳬ रूपं-
ऽव्रतेन दीक्षाम्पितृभ्यः स्वधायिभ्योऽश्विभ्याऽचक्षु-
र्ज्जिह्वा मेऽपोऽअद्य बृहदिन्द्राय तिस्रो देवीर्हविषा
चातारमिन्द्रमश्विना नमुचे,रश्विना हवि,रश्विना पि-
बतां सुत्रामाणं पृथिवीन्देवीस्तिस्रो देवो देवैः स-
मा त्वा यकासकावृद्धामेनामूर्द्धमेनमह्वानाम्मन्त्यो देव-
ह्यो [illegible] हरिणीः पृच्छामि त्वा यूपव्रस्काऽ[illegible]
निक्रमणान्निषदनमेव नोऽसुत भूयादध यज्ञायन्त्रा
वऽऊर्ज्जो नपातं जोष्ट्रीऽऊर्ज्जोऽऽहुती प्रथमा वामु-
पावस्वजत्मन्या रथवाहणᳬ हविश्चन्द्रमा मनसो-
ऽहृभ्यः सम्भृतः प्रजापतिश्चरति ऽवेनस्तदिदसे ब्रह्मा
महोऽअग्नेर्विश्वाड्बृहद्वाञ्चोऽअद्य देवासो हि
घृतवती भुवनानामनड्वाऽहम्पिता नोऽसि द्विविधाऽइ-
मस्मिषे पिन्वस्व दिग्भ्यः स्वाहा व्वाचे यमाय तयोरू-
नाधिकशतमेकम् । १८ । अथ चतुष्पदा मध्योदात्ता-
नि । यद्ग्रामेऽवभृथ निचुम्पुण ऽविप्रस्त्वो देवस्यन्त्वे
चिदसि मित्रो नऽइरावत्यपाम्पेरुर्थ्यं देवासश्चितन्देवा-
नां त्वमिन्द्र त्वां धाता रातिः सुगा वो व्वयᳬ हीन्द्र-
स्य ककुभᳬ रूपं शन्नो भवन्तु व्वाजस्येमासुदुतिष्ठो-

र्ध्वऽऊषुणऽओषधयः प्रति मित्रः सꣳ सृज्य सिनीवाली
सुकपर्द्दोत्थाय बृहती दृशानो रुक्मोऽक्रन्दग्ने शिवो
भूत्वा विश्वा ते प्रप्रायमयꣳ सोऽग्ने दिवो नमः सु
याऽओषधीरश्वत्थे वो यदिमा सहस्व मे दीर्घायुस्त
ऽऊर्ज्जो नपाद्भूरस्यपाङ्गर्भं ध्रुवचितिर्ध्रुवयोनिः कु-
लायिनी घृतवती पृथिव्याः पुरीषमिन्द्राग्नीऽअव्य-
थमानाꣳ सꣳ समित्प्रमुञ्च या ते रुद्र शिव परि नः
शितिकण्ठा यऽएतावन्तऽउप ज्मन्ये देवा देवेषु प्रा-
णाऽअपानरा हविषा व्याद्यधानस्तऽआयजन्ताशुः
शिशानो यस्य कुर्म्मः प्राचीमन्वग्ने सहस्राक्षाजुह्वा
नः सुप्रतीकः सिन्धोरिव प्राध्वने स नो भुवनस्य प-
तऽइन्द्रदृंहन्तो वि नऽइन्द्रो व्वेद्याव्वेदिर्ये समाना
यमग्ने कव्यवाहन त्वमग्ने ये चाऽधा यथा नः सो-
मो राजाऽद्भ्यः क्षीरं कुम्भो व्वनिष्ठुराह्मन्नुपस्थे
यद्देवास्तिस्रो यत्र ब्रह्म यत्रेन्द्रः समिद्धऽइन्द्रो जुषा-
णो बर्हिर्व्वनस्पतिरवसृष्टऽउषासा नक्तं स्तोकानामि-
न्दुं दैव्या होतारा भिषजा व्वसन्तेनऽऋतुना पञ्चे-
मामगृभ्णन्नभिधाऽअसि प्रजापतये सूर्यस्ते चन्द्रमा-
स्ते काऽईमजारे षडस्य होता यक्षत्प्रजापतिं व्यस्यै-
मे यऽआत्मदास्तमीशानमदितिद्यौः सुगव्यन्नोऽनुवी-
रैः समास्त्वा पीवोऽअन्नारयिवृधऽआपो ह यस्मिन्मया-

भिरग्नो नियुङ्क्ष्वेऽइन्द्रस्य होता यज्ञस्त्विषो देवीर्धि-
यो जोष्टारं स्तोर्णं बर्हिरन्तरा मित्रावरुणा वीरिया-
तेऽत्रा ते बध्नन्ती वेदूर्ध्वे तिष्ठन्त्वनीते मर्त्यो वृ
देवोऽस्याजरामऽइमान्ते विश्वे देवाः प्रवायुं व्यस्मि-
न्नोऽषाढं युत्स्वप्नसतीमश्विना प्रातर्जितस्मगमश्वा-
वतीर्गोमतीरिमञ्जीवेभ्यो बहव्यं विश्वाऽआशा
यावती द्यावापृथिव्यग्निरर्ठं० हृदयेन यविश्वान्तस-
र्व्वाणि सम्भूतिञ्च विद्ययाश्च शतमेकाचत्वारिंशत् ।
१८ । अथ चतुष्पदाऽन्त्योदात्तानि । अयन्ते देवश्च्यु-
तौ देवेष्वच्छिन्नस्य ते सप्रथमस्ते नोऽअर्व्वन्तोऽन्नये गृ-
हपतये यस्य प्रयाणं द्यौस्ते पृष्ठन्नि होता सर्ठं० सीद-
स्वापो देवीर्न्नाभा पृथिव्याऽउद्देषाञ्चाकृ दिवस्परि
श्रीणामुदारऽइडामग्ने ताऽअस्य निवेशनः सङ्गमनः
सोमराज्ञोर्व्वङ्घोम्मो वो रिपत्यावकवर्च्चाः शुक्रान्नवस्वऽस्व-
तावानस्महिपँय्या शतेन समग्यक्कस्वल्लुग्ने जातान्स-
म्यञ्जीभिः सम्प्रच्च्यवद्वस्रुप परि ते धन्वनो र्व्विकिरि-
द्रद्र त्रिलोहित यो नः पिता सूर्य्यरश्मिर्हरिकेशो
ऽविमानऽएषः पृथिव्याऽअर्हं खट्यैन्तस्त्याए सवितुश्चि-
त्तिञ्जुहोमि घृतं मिमिक्षे ऽविश्वेऽश्योमो ते यदाकू-
तादामच्छ इगिरासन्द्रो रूपमाश्यावयेडाभिर्व्वक्षान्सु-
रावन्तम्बर्हिषदँय्यस्ते रसस्वर्ठं० सोम पितृभिर्व्वी-

ऽअग्निस्तदश्विना सुखठं॰ सन्मति यद्वेऽश्याद्धामि सि-
न्धन्ति परीक्षितो देवैरुषासा नक्तेन्द्राद्यैन्द्रस्यातन्नो-
ऽश्विना मेषजं सविता त्वष्टास्ता भिषजा प्र बाहवा
का स्विद्द्यौरासीद्वृषाणान्वा भ्राता चापि तेषु कोऽस्य
ऽवेशाहस्प्रजापते न त्वदश्ववा मरुतः सञ्च प्रजापते-
स्तपसेमा तेऽउप प्रागाच्छसनं प्राचीनर्व्वर्हिर्व्वयन्तस्-
तीरुविंशैतावानस्य ततो विराडजन तस्य यज्ञाज्जातं
युधि युत्कर्माणऽइडाभिरस्मे रुद्रा विश्वेऽअद्य
त्वमिन्द्र देवन्देवंऽअइच्छन्ति त्वा न ते द्युभिरग्निभि-
र्व्वर्गऽइव सप्तेऽस्तपयोऽपश्यत्क्तोऽर्यमाय त्वा मयि त्य-
दन्यन्नमो हयमन्यदेव शतमेकमूनमिति । २० । अथ-
चतुष्पदाममधेऽतोऽहातानि । सर्वस्त्वभागास्य येषा-
मद्योति सो पूगासऽयायुधम्भ्नदग्नेर्वसुमते रुद्रवते
मूर्द्धानन्दिवऽआक्रम्य वाजिन्नुदक्रमीन्नक्तोषासा स-
मनसा यास्विक्रतारमह्वरस्य विज्यन्धनुरिमा रु-
द्राय विश्वकर्म्मा विमनाऽस्मभिद्रऽमना वेतावद्रूप-
मग्निर्व्वातानृतुमतऽइदम्पित्रव्यस्तदस्य रूपमाम्ना।खि
स्थालीर्व्वी भूतानां समिद्धोऽअग्निरश्विना तन्नो वा-
तऽएकस्त्वष्टुरनाधृष्यो जातवेदा नराशठं॰ सख्य
महिमानं सहृद्यो जातः स्वादुषठं॰ सदः पितरस्तेय-
ज्ञन्नहि रप्पशं हिरण्यहस्तोऽअसुरः शन्नो मित्रोऽचि-

षऋदद्दृष्टा सविता प्रथमे तद्देजत्येकोनचत्वारिंश-
त् । २१ । अथ चतुष्पदा प्रथमे को जात्यः पवित्रे
स्थो धान्यमस्यदित्यै राऽस्नासि भूर्भुवः स्वरयमग्निः
पुरीष्योऽग्रावो देवासस्तस्यास्ते सत्यसवसो विष्णोर्नु कं
प्रतद्विष्णू रक्षसां भागोऽसि देवीरापोऽअपान्नपात्सा-
वित्रोऽसि देवश्रुतस्त्वैनसऽइमन्नो देव पुरीष्यासोऽअ-
ग्ने त्वं पुरीष्यो मातेव पुत्रँय्यन्ती राट्सुपर्णोऽस्यथर्वं-
तेमन्नो देव पुरीष्यासोऽग्ने त्वन्नऽआग्निवन्तेजो-
ऽग्नात्परिस्रुतोऽविन्न भेऽएवेद्विभूमीचा यकोऽसकौ
यद्विष्यत्तव शरीरँव्वनस्पते व्वीड्वङ्गो येन द्यौरि-
न्द्राग्नीमित्रावरुणा प्रैतु ब्रह्मणस्पतिं सुखारथिर-
श्वानिव प्रवो महे मह्युत नऽउग्रस्ते शा व्वास्य शतं त्रिं-
शदुत्तरम् । २२ । अथ चतुष्पदा मध्ये जात्योऽग्ने त्वँ-
व्विष्णोरराटमिन्द्रस्य स्यूः परि वीरस्यग्नेरनीकमभि-
भूरसि युजे वां सुजातो ज्योतिषा मूर्द्धाऽसि राडयम्पु-
रो हरिकेशः पञ्चाजुह्वाना सरस्वत्यश्विना तेजसा
सत्वग्नो यद्दातो देवीऽउषासा नक्तेन्द्रस्य रूपं परि-
द्द्यावापृथिवी विदद्वद्दी त्वन्नोऽअग्ने पयसस्पथः
परिपातमिमा गिरः प्रनूनङ्जनस्य त्वा सप्तविं॰
शतिः । २३ । अथ चतुष्पदा मध्येऽन्यो जात्यो घृ-
ताच्यसि घृताचीस्थोऽयमिहाचन्नमीमदन्त सुस-

ऽहमन्त्वा देव सवितरेष ते कदा चन प्रयुच्छसि प्रजा-
पते: प्रजाऽअभूम हिरण्यरूपाऽउषस: शर्म्मी च पर-
मस्या: परावतो या: सेनाऽअपो देवीर्व्वोधा मे पुनस्त्वा
यत्ते दिवि वर्च्चो युनक्त सीरा लाङ्गलमपवीरवत् [illegible]श्रय:
प्रति विष्ठिता: पृथिवीँव्याश्च ब्रह्म जज्ञानं तव भ्रमा-
स: प्रजापतिस्त्वाऽवोचाम कवये विश्वस्य दूतँव्येन
व्वहस्यद्यावोचन्मा नो महान्तँव्या ते धामानि परमाणि
विश्वकर्म्मा ह्युदग्राभञ्चाग्ने प्रेहि प्रस्तरेण परिधि-
ना पशुभि: पशूनायन्तु न: पितरो येऽग्निष्वात्ता-
स्तमिन्द्रं देवं बर्हि: सरस्वती त्रि:, स८०मितो रश्मिना-
ना भद्रं कर्णेभिर्म्मो नो मित्रो यन्नीक्षणं तनेणा-
ग्नेऽति निह: स्वाससत्यमिन्द्रेणानु त्वा रथो जीमूत-
स्येव भवति त्रिपादूर्द्ध्वस्तस्माद्यज्ञाद्यत्पुरुषेण त्रीणि
शताऽऽयदिषऽइन्द्रो वृत्रँव्वट्सूर्य्यस्य देवेभ्यो हि दे-
वेन नऽएष वस्तोमो नमस्तेऽअस्तु प्रजापति: सक्रिभ्रय-
माण: कुर्व्वन्नेव स परि चतुष्षष्टि: । २४ । अथ चतु-
ष्पदा कम्पो जात्य: । रूपेण वऽउपांशो व्वीर्य्येण स-
धमादो द्युम्निन्नीराददे गायत्रेण प्रतूर्व्वन्नेहि मुञ्चन्तु
माऽसस्मिन्महत्यश्विनो भैषज्येन सुभू: स्वयम्भूर्य्यहा-
जिनो दश । २५ । अथ चतुष्पदा कम्पमानेऽन्तक: ।
द्वितीयँव्वसो: पवित्रमग्नये जुष्टं गृह्णाम्यादेऽध्वरकृ-

तं सँवर्चसा ध्रुवासि ध्रुवोऽयमग्ने नयान्तस्ते समु-
द्रे तेऽग्रन्त: सरस्वत्यै व्याचोऽपो देवाऽग्रा विश्वत:
स॰ सृष्टाँवसुभि: स॰ शितश्च समुद्रे त्वा स बो-
ध्यति विश्वास्त्वसुत्तमाऽग्ने तव श्रवऽउदग्ने तिष्ठ
स्वेदं दैव्यां ते रुद्र शिवा तनूरघोरासौ योऽवसर्पति
सऽइषुकृस्तैरभि गोत्रायभि प्रवन्त धामन्देऽग्निमँसुन-
त्रिज्ञ परीतोषिञ्चत बर्हिषद: पितर: पयसा शुक्र-
मिन्द्र: सुत्रामोद्रयन्तनूपा भिषजेन्द्रन्तुर: कवष्यो
वाश्विना गोभि: शैशिरेण तेजोऽसि व्यसवस्त्वाऽञ्जन्तु
गायत्री त्रिष्टुप्द्यौस्ते अग्ने परेभ्यो मा त्वा तपस्पा-
हि नऽओजो न सुबर्हिषमापश्चिदातत्तऽआनो यज्ञं
चन्द्रनाऽमात्सु पञ्च नद्यस्त्वमिमा सह लोमाऽनसुर्यो
नाम हिरण्मयेन पात्रेण पञ्च पञ्चाशत् । २६ । अथ
चतुष्पदा द्विकम्प: । अपारकन्द्यौरिव भूम्ना वनेषु वि
द्वितीयस्त्रसमुद्रे ते चत्वारि । २७ । अथ चतुष्पदा
द्विजात्य: । प्रथमँवसो: पवित्रं तनूपाऽअग्ने सन्न:
सिन्धु: पवित्रे स्थ: स्थिरो भवापेत वीत स दुद्रवत्क-
न्याऽइव वहतुँवायव्यैर्वायव्यानि वैश्वदेवी पुनत्युप-
हूता: पितरोऽहाव्यग्ने त्रिज्ञास्यो होताऽहुर्यर्वा-
ह्राणोऽस्य सोमो धेनुं चिरायुष्यँवर्चस्यं षोडश । २८ ।
अथ चतष्पदामध्ये तकारान्ता: । अच्छतमसि दिवो

वा ज्योतिरसि यस्ते द्रप्सस्कन्दति कोऽदात्सोम-
स्य त्विषिरस्यग्ने बृहन्हꣳ सः शुचिषत्सञ्ज्ञानमसि
हिरण्यगर्भः सँव्वरूणीन्त्वष्टुः प्रोषदश्वः किꣳ स्वि-
दासीद्विश्वतश्चक्षुरुत व्वाजस्य मा सोममद्भ्यः स्वा-
हा यज्ञं व्वरुणो यद्दस्या देवम्बर्हिरिन्द्रन्देवऽइन्द्र तन्नो
देवम्बर्हिर्व्वयोधसं देवो नराशꣳसस्त्रुभिरादित्यै-
र्न्नो भारती यदक्रन्दो यमेन दत्तं हिरण्यश्टङ्गो य-
ऽउपप्रस्वासय सहस्रशीर्षा वेदाहमेतमद्या देवास्ति-
रश्चीनो व्विततोऽयाधमत्यमन्महे शवसा परं स्त्रयो-
स्त्रचुरर्नेजदेकमन्यदेव नीराधिकचत्वारिंशत् ।
२८ । अथ चतुष्पदा अन्त्ये नकारान्ताः । ये रूपाणि
तन्वा शोचिष्ठाव कद्रुं स प्रथमऽइडेरन्ते युञ्जानः
प्रथमं हस्तऽआधाय प्रतूर्त्तँ व्वाजिन्नँव्वसाथामा त्वा-
ऽऽहार्षमप्रति स्वशो यामिषुं शिवेन व्वचसा द्रापेऽअ-
न्धसो व्विश्वकर्म्मन्हविषा बलविज्ञाय स्थविरऽइन्द्र-
स्य वृष्णऽइन्द्रेमं पञ्चदिशो व्वयन्नाम व्वाजस्य नु
भा—
यद्दत्तँय्यच्च धाराऽइन्द्रस्य रूपमाया निषसाद मह्नाँस्य-
ञ्चिदह्नान्तः स्वित्सूर्य्यऽएकाकी प्रथ भीमं सप्तदश । २९ ।
कक्राव्णोऽअकारिषं पञ्चस्वन्तस्तान ानि । आ वायो आघा
सर्व्वे निमेषा यज्ञो देवानामिन्द्रव यन्ते देव्यग्निर्म्मूर्द्धा
भजीऽअपात्पितुन्त्वशिर्व्वृभ्यां पिन्वस्व ं मतौ नव । ३० ।

ग्ने ब्रह्म व्वसुब्भ्यस्त्वोग्ग्रंस्युद्दिवमत्स्यन्न्यान्मनस्ते याँवा-
न्तम्प्ररक्षथा व्विश्श्वेदेवासऽआतिष्ठेन्द्रमिदुदुत्यम्प्रजाप-
ते नादित्यै रास्नाऽस्यचो नामाश्विनौ च्छागस्य यु-
ङ्क्ष्वा न्त्वसी दैव्यावध्वर्यू ब्रह्मणस्पते इति इठं॰ह मा-
ऽनाधृष्टा पुरस्ताद्विश्श्वासाम्भुवां स्वाहा प्प्राणेब्भ्यो लो-
मब्भ्यश्चतुर्व्विंशतिः । ३४ । अथ व्यवसानाऽऽद्यनुदा-
त्ताः । युष्माऽइन्द्रः सवितुस्त्वैषा तेऽग्निऽज्ज्योतिर्व्व-
तङ्कृणुतेन्द्रः प्प्राणोऽयँव्वेनो मरुत्वाँ २ ॥ ऽइन्द्र
महाँ२ ॥ ऽइन्द्रो यऽओजसा व्वाचस्पतिम्भुवसदन्त्वा-
ऽस्मिन्व्यामद्यस्व कुविदङ्ग व्विश्श्वकर्म्मा त्त्वा द्वे पर-
मेष्ठी त्त्वा द्वे स्वादद्वीन्त्वेठं॰ हविष्ट्वा रूपऽऋता-
वानँव्वैश्श्वानरस्य सुमतौ व्वैश्श्वानरो नऽऊतयेऽग्नि-
र्ऋषिर्य्यमाय त्त्वा समुद्द्राय त्त्वा समुद्द्राय त्त्वा ष-
ड्विंशतिः । ३५ । अथ व्यवसाने कम्पः । सँव्वपाम्युप-
हूतो हयौः कम्पो जात्यः सठं॰हिताऽस्याकूत्यै प्प्रयुजे
तप्प्रायणी मे बृहन्नसि यवोऽसि द्वे माऽपः प्प्रपर्व्वतस्य-
मम्मा हिठं॰सीद्दृर्ऽअन्तरिक्षे निषसाद महाँ२॥ऽइ-
न्द्रो व्वज्ज्रहस्तो यस्ते स्तनोऽभीमं सप्तदश । ३६ ।
अथ व्यवसाने प्रथमाद्द्वौदात्तानि । आ वायो आघा
ये व्विनो ग्रहाऽऊर्ज्जाहुतयो यन्ते देव्यग्निर्म्मूर्द्धा
रेतो मूत्रमग्निश्च व्वैश्श्वानरस्य सुमतौ नव । ३७ ।

अथ व्यवसानान्तोदात्ताः । गन्धर्व्वस्त्वोपह्वताऽइन्द्रा-ग्नेर्व्वो विवस्वन्नादित्यैजतु दशमास्योऽग्निः पशुरथै-तानष्टावासुते दस्रा युवाकवः स्योना पृथिव्यन्हानि शमेकादश । ३८ । अथ व्यवसाने जात्यः । पुरा क्रूरस्य विदोऽस्यापोऽअस्मानभि स्वयं घृतेनाक्तावुपयाम-गृहीतोऽसि ध्रुवोऽस्यस्मे वः पुरीष्योऽस्यृतꣳ सत्त्वमा-युश्च शुक्रश्चेषश्चाग्ने त्वन्नोऽअन्तमऽआयुर्व्वर्च्चेन कुवि-दङ्ग प्रजापतये त्वेमा नु यद्येमामधि नोऽपेतऽएक-विंशतिः । ३९ । अथ व्यवसाने द्विर्जात्यः । कोऽसि महाँ२॥ऽइन्द्रो नृवदाचर्षणिप्राः सहश्च नभश्च तपश्च पश्च । ४० । अथ व्यवसाने द्वितीयाद्युदात्तानि । आदि-त्यास्त्वस्तोम राजन्निन्द्रवायूऽइमेऽइन्द्राग्नीऽआगत-सोमासश्चर्षणीधृतऽइन्द्र मरुत्वो जवो यः षोडशी स्तो-मोऽग्निꣳ होतारन्नमोऽस्तु रुद्रेभ्यो हिरण्यया देवा यद्धापः प्राणाय स्वाहा बृहस्पतेऽअतीन्द्र गोमन्नि-न्द्रायाह्यग्निर्ऋषिणीयञ्छन्दः पयसो रेतो विंश-तिः । ४१ । अथ व्यवसाने तकारान्तास्त्वमग्ने व्रत-पाऽइदमापो बृहस्पतिस्सुतस्य विश्वकर्म्मन्हविषेन्द्र-स्य वज्रोऽस्यामा वनस्योलब्ध्नाभिर्योऽष्टौ । ४२ । अथ व्यवसाने नकारान्ताः । भद्रो मे सजोषाऽइन्द्रहरति ऊर्व्वी भव यदा पिपेष पञ्च । ४३ । अथ व्यवसाने

प्रथमे द्वितीयान्त्यमुदात्तानि । उखाङ्कृणोतु कृतस्त्वं
द्विः । ४४ । अथ व्यवसाने त्र्याद्युदात्ताः । एदन्त्या-
न्त्या द्विः । ४५ । अथान्त्यावसाने त्वाद्युदात्ताः । मा
भेरग्ने दब्धायोऽन्नस्य स्वाहा यज्ञं वरुणस्योत्तम्भनं
देवीरापः शुद्धा वोढ्ढँ व्वाचन्ते द्वितीयं स्वाङ्कृतोऽसि
सोमः पवते यस्तेऽअश्वसनिर्व्वेशीनान्त्वा व्वसवस्त्व-
योदृशान्तरेण ये देवाऽअग्निनेत्रा व्वसवस्त्वा धूपय-
न्त्वाकूतिमग्निँव्विष्णोः क्रमोऽसि चिदसि तयाऽऽयु-
र्म्मे नवविंठँ०शत्या स्तुवत तन्तुना रायस्पोषेण रा-
ज्ञ्यस्यधिपत्न्यसि व्वसुते गणेभ्यो घृणावे ग्रामत्राय
पर्णीयौगस्य ज्येष्ठयज्ञ शम्बोकचर्मिश्चा च व्वसु चै-
का च चतस्रश्च व्विंशेडितो बर्हिस्तृर्णम्नदाः सु-
पेशसोषे दैव्या होतारा तिस्रो देवीस्तत्त्वाऽश्विनौ
सरस्वती चत्वार्य्यग्निः स्विष्टकृतन्त्वामद्य प्राचच्यै
व्वाताय नक्षत्रेभ्यस्ताऽउभौ व्वयो गायत्र्यै भूम्या-
ऽआकूत्वातं प्राणेन विष्टतिन्नाभ्यैषोऽस्येकाधिकः ष-
ष्टिः । ४६ । अथान्त्यावसाने त्र्याद्यनुदात्तानि । इषे
त्वाऽग्नेस्तनूरिन्द्रघोषस्त्वा रक्षोहणं व्वलगहनं रक्षो-
हणो वो मित्रस्य माऽऽक्रमने मऽउशिक्स्त्वसापद्ये
स्वाहैव ते निऋतेऽआविश्वेभ्योऽजद्वीमारोहाग्निः
पृथुः सविता प्रसवित्राऽपान्त्वाऽयम्पुरऽइयमुपरि स-

जूर्त्तुभिरनड्वान्वयः पृथिवी छन्दोऽग्निर्देवता-
ऽऽच्छन्दो विराडसि नयः प्राणश्च सत्यञ्च तिस्रो वयि-
श्च ब्रीह्यश्चाग्निश्च द्वे मित्रश्च चतस्रोऽग्निर्द्वे पष्ठ-
वाट् च निरश्विभ्यान्त्वा प्रथममग्नये स्वाहा हिङ्का-
राय प्राणायाग्नयः पृथिव्यै धूम्रान्वसन्ताय पष्ठवाहो
विराजे प्रजापतये पुरुषान्मयुः प्राजापत्यः पुरुष-
स्तगश्चन्द्रमसो मशकान्केशैर्मकतांश्छन्वा नृत्ताय
सूतस्तये स्तेनहृदयं पञ्चपञ्चाशत् । ४७ । अथा-
न्त्यावसाने ह्यृद्वीदात्तानि । एष ते रुद्रभागः स्वराड-
सि सपत्नहाऽग्नये त्वा गायत्रच्छन्दसँव्वसवस्त्वा छ. सव-
न्तु राड्डासि नृपदे वेट् प्रथमं कृष्णग्रीवाऽऽग्नेयाऽउ-
न्नतऽऋषभः कृष्णा भौमाः प्रथमद्वितीयोक्ताः सञ्चरा
धूम्रा बभ्रुनीकाशाः प्रजापतये च सौरी बलाकाऽए-
णयह्नो व्वर्षाहूर्ऋतूनामाखुः श्वित्रऽआदित्यानाम्पृष-
णँव्वनिष्ठुना नदीभ्यः पौञ्जिष्ठं सन्धये जारमुत्सादे-
भ्यः कुब्जम्भायै दार्व्वाहारमन्यवेऽयस्तापँव्यमाय यु-
मस्त्वं सरोभ्यो धैवरमज्जराजाय कितवं प्रतिश्रुत्का-
याऽअर्त्तनमग्नये पीवानमष्टाविंशतिः । ४८ । अथा-
न्त्यावसाने ह्येको जात्यः । कुक्कुटोऽसि जनयत्यै त्वा-
ऽग्ने व्रतपतऽएष ते गायत्रो ध्रुवोऽसि पृथिवीन्देवान्दृ-
वँव्वसवस्त्वाऽदितिष्ट्वाऽयन्द्दक्षिणा सहस्रस्य प्रमा व-

मऽआप्यावेऽइमा मे व्वाजश्च वित्तञ्च स्रुचश्च देवी-
ऽअग्निर्य्यते स्वाहा काय द्वितीयाऽग्नये स्वाहाऽऽयु-
र्य्यज्ञेनैकस्मै रोहितो धूम्ररोहितः शुद्धवालस्तृतीयो-
क्ताः सञ्चराः सुपर्णः पार्ज्जन्यः खड्गो व्वैश्वदेवोऽग्नेः
पक्षतिर्ब्रह्मणे ब्राह्मणं तपसे कौलालमर्म्मेभ्यो ह-
स्तिपस्त्वोभत्सायै पौल्कसमेकत्रिंशत् । ४९ । अथान्त्या-
वसाने कल्पः । पृथिवि देवयजन्यदित्यै व्व्युन्दनम-
ग्ने वः समुद्रङ्गच्छ प्रथमः स्वाङ्कृतोऽसि स्वर्णी चतुः
कल्पाद्इडस्पदे तनूनपात्सरस्वतीन्नराशꣳसन्न द्वि-
कल्पो दुरो दिशो व्वाजाय स्वाहा सोमाय कुलुङ्ग-
ऽइन्द्राग्न्योः पक्षतिरग्नयेऽनीकवतेऽग्नये गायत्राय
नम्मीय पूँस्नलूं सुमित्रिया नोऽष्टादश । ५० । अथा-
न्त्यावसाने कल्पो जात्यः । भूताय त्वा दिविविष्णु-
र्द्वितीयः सिꣳह्यसि तेजोऽसि तेजो मयि धेह्याब्रह्म-
न्नश्वस्तूपरः शिल्पा व्वैश्वदेव्यऽएताऽऐन्द्राग्ना
स्तृतीयः कृष्णग्रीवाऽआग्नेयः कृष्णग्रीवा दश ।
५१ । अथान्त्यावसाने द्विर्ज्जात्यः । अस्कन्नमद्याग्र-
यणोऽसीदमुत्तरादाशुश्शिष्टस्समुद्रोऽसि नभस्वान्पृ-
श्निस्तिरश्चीनपृश्निस्तृतीयः कृष्णग्रीवाऽआग्नेया-
ऽअन्न्यत्रापोऽर्द्धमासानामिन्द्रस्य कक्षोडो नव । ५२ ।
अथान्त्यावसाने त्रिर्ज्जात्यः सिꣳह्यसि मित्रावरुणा-

दभ्यास्त्वा षड्जाश्यो मघवे त्वाऽग्नये त्वा मह्यं चतुरो
जाश्यः पृथिव्याः सधस्थात्त्रिष्टदसि प्रथमा द्वितीयैस्त्वा-
रो जाश्या मघवे स्वाहा माहेन्द्रहिङ्कर्न्नव । ५३ । अ-
थान्त्यावसाने नकारान्ताः । मनो मे प्रथमाग्नयेऽनीक-
वते ऽवसन्नाय कपिञ्जलानाक्समुद्राय शिशुमारा-
न्त्सोमाय हर्ठ॰सानग्नये कुटरून्त्सोमाय लवाजन्के
पारावतान्वसुभ्यऽऋष्यानीशानाय परस्वते दश ।
५४ ।अथ निरवसाने ह्याद्युदात्ताः । नमो वऽइन्द्रश्च
मरुतश्च विश्वे देवाश्चमसेऽवेष्टा इन्द्रश्चाश्वयमु-
दीचीमारोह मा च्छन्दऽएकया स्तुवतैवच्छन्दो बभ्रव्-
णाय रोहिताय कृत्स्नायोष्णीषिणे विस्तृजद्भ्यः सभा-
भ्यो गणेभ्यस्तक्षभ्योऽश्वेभ्यो ह्रस्वाय ऽवन्याय विं-
शतिः । ५५ । अथ निरवसाने ह्यनुदात्ताः । प्राणाय
मे प्रोह्यमाणः सोमः पूषा पश्चाद्वैराल्यैतस्य प्रती-
चीमारोह मूर्द्धा ऽवयो नवभिरस्तुवत रश्मिना स-
त्याय प्रतिपदस्यग्निजमदग्नि रूपस्त्याऽस्य द्वादश ।
। ५६ । अथ निरवसाने कम्पः । कृष्णोऽसि मधुमती-
न्नैः परमेष्ठ्यभिधीत इति त्रिः । ५७ । अथ निरव-
साने कम्पो जात्यः । समुद्रोऽस्यग्निरेकाक्षरेण
युवानाम्भागस्त्रिः । ५८ । अथ निरवसाने ह्येको जा-
त्यः । विश्वे देवा नवभिरस्तुवत नमो हिरण्यबाहु-

वे नमः कपर्द्दिने स्रुत्याय ठपथ्याय पार्य्याय सप्त । ५९ ।
अथ निरवसाने द्विर्ज्जात्यः । उशिगसि कृष्णाऽऊर्म्मि-
उर्य्येष्ठाय व्विलिम्पने ब्रज्याय पञ्च । ६० । अथ नि-
रवसाने त्रिर्ज्जात्यः । सोभ्याय कूप्याय चतुरग्ने
ऽभीगोऽसि व्वसूनाम्भागोऽसि सिकत्याय शुष्क्याय
षट् । ६१ । अथ निरवसाने मध्यावसाने द्वितीयम-
न्त्योऽस्यग्ने व्वाजजिद्विभूरस्याददे रावाऽसि द्विर्ज्जा-
त्यमिन्द्राय त्वा बृहद्वते पञ्च । ६२ । अथ चतुरवसा-
ने स्थाद्युदात्ताः । प्रत्युष्टꣳ रक्षोऽङ्ग्नानाक्त्वा व्यम्ब-
कन्धा मान्युगसि माऽहिर्ब्भूर्म्मा पृदाकुरग्ने पवस्वा-
दग्ध्यस्य व्वाजी कनिक्रदद्देवोऽसीन्द्रस्यौजस्त्य
स्वाहा रुद्राय्यैकादश । ६३ । अथ चतुरवसाने स्था-
द्युदात्ताः । अग्नीषोमयोरुज्जितिं द्विकम्पाः सजूर्द्दे-
वेनाग्ग्रस्तुरꣳ शुष्कोऽग्नीषोमाभ्यान्त्वत्तॅ वृषभस्तु-
त्निष्टुम्नोजसा युवन्त्वं देवस्याहम्प्रथमो देवस्य त्वा
पृथिव्याः सुपर्णोऽसि व्विराड्ज्योतिरसिꣳ सा-
हस्वान्निस्वो व्वायोः पूतः पुनन्तु मा पितरः सॅव्व-
त्सरोऽस्यग्निमग्नीषोमयोरुज्जवे त्वा हिरण्मयेन पा-
त्रेणेति द्वाविंशतिः । ६४ । इति महर्षियोगियाज्ञव-
ल्क्यकृता मनःस्वारशिक्षा समाप्ता ॥

---

# अथ प्रातिशाख्यप्रदीपशिक्षा-ऽऽरभ्यते ॥

---

हेरम्बं विघ्नहर्तारं प्रणमामि सरस्वतीम् ॥ य-
योर्न्नमनमात्रेण विघ्नसङ्घो विनश्यति ॥ १ ॥ प्रातिशा-
ख्यं च शिक्षाश्च सम्यगालोच्य यत्नतः ॥ वैदिकानां
सुबोधाय सम्यक्पाठस्य सिद्धये ॥ २ ॥ सदाशिव-
तनूजेन बालकृष्णेन धीमता ॥ प्रातिशाख्यप्रदीपाख्या
शिक्षा सम्यङ्निरूप्यते ॥ ३ ॥ अथ वेदाध्ययनप्रका-
रः । तत्र याज्ञवल्क्यः । प्रणवं प्राक्प्रयुञ्जीत व्याहृती-
स्तदनन्तरम् ॥ सावित्रीं चानुपूर्व्येण ततो वेदान्स-
मारभेत् ॥ १ ॥ हस्तौ तु सँय्यतौ धार्य्यौ जान्वोरुपरि सं-
स्थितौ । गुरोरनुमतिं कृत्वा पठेन्नान्यमतिर्भवेत् ॥
२ ॥ ऊरुभागे तृतीये तु करन्न्यस्याथ दक्षिणम् ॥ प्र-
सन्नमानसो भूत्वा किञ्चिन्नम्रमधो मुखः ॥ ३ ॥ कू-
र्मोऽङ्गानीव संहृत्य हस्तदृष्टिर्दृढासनः ॥ स्वस्थः प्रशा-
न्तो निर्भीतो वर्णानुच्चारयेद्बुधः ॥ ४ ॥ नाभ्याहन्यान्न
निर्हन्यान्न गायेन्न च कम्पयेत् ॥ यथादावुच्चरेद्वर्णाँस्त-
थैवैतान्समापयेत् ॥ ५ ॥ निवेश्य दृष्टिं हस्ताग्रे वेदार्थ-

मनु चिन्तयेत् । सम्यगुच्चारयेद्वर्णान्हस्तेन च मुखेन-
च ॥ ६ ॥ स्वरस्यैव तु हस्तस्य द्वावेतौ युगपत्स्थितौ ॥
हस्ताद्भ्रष्टः स्वराद्भ्रष्टो न वेदफलमश्नुते ॥ ७ ॥ न का-
राग्रो न लम्बोष्ठो नाव्यक्तो नानुनासिकः ॥ गद्गदो बद्धजि-
ह्वश्च न वर्णान्वक्तुमर्हति ॥ ८ ॥ कुणिर्नाका स्फुटो दण्डी
स्वस्तिको मुष्टिकाकृतिः ॥ एते वै हस्तदोषाः स्युः पर-
शुश्चेति सप्तमः ॥ ९ ॥ अथ करचालनक्रमस्तत्रैव
अङ्गुष्ठस्योत्तरे पर्वे तर्जन्युपरि यद्भवेत् । प्रादेशस्य
तु यो देशस्तस्मात्तं चालयेत्करम् ॥ १० ॥ उदात्तं भ्रु-
वि पातेन प्रचयं नासिकाग्रतः । हृत्प्रदेशेऽनुदात्तं तु
तिर्यग्जात्यादिकाः स्वराः ॥ ११ ॥ स्वरिते त्र्यङ्गुलं
विद्यान्निपाते तु षडङ्गुलम् ॥ उत्थाने तु नवाङ्गुलमे-
तत्स्वारस्य लक्षणम् ॥ १२ ॥ तथा च प्रतिज्ञा सूत्रे ॥
हृद्यनुदात्तो मूर्धन्युदात्तः श्रुतिमूले स्वरितइति ॥
अथ स्वरविचारः । तथा चोक्तम् । स्वरउच्चः स्वरो
नीचः स्वरः स्वरित एव च ॥ स्वरप्रधानं त्रैस्वर्यं व्य-
ञ्जनं तेन सस्वरमिति ॥ अथोदात्तानुदात्तस्वरित-
स्वराणां लक्षणान्युच्यन्ते । तथा च प्रातिशाख्ये । उच्चैरु-
दात्तः ॥ १ ॥ ऊर्ध्वभागे निष्पन्नःस्वरउदात्तसञ्ज्ञः स्या-

अधोभागे निष्पन्नः स्वरोऽनुदात्तः स्यात् । यथा । आर्त्विय्यऽस्त्वपीणाम् । अनुदात्तप्रदेशाः । "उदात्ताच्चानुदात्तस्य स्वरितम् ॥ ४ ॥ उदात्तादक्षरात्परं व्यञ्जनव्यवहितमनुदात्तमक्षरं स्वरितं भवति । यथा स्वाहा श्रिया । श्रियञ्च ॥ निहितमनुदात्तस्वरितपरम् ॥ ५ ॥ अनुदात्तमापद्यते स्वरितं उदात्तपरं स्वरित परं च । उदात्तपरे यथा स्वाहा सोमाय । स्वर्ग्यायेति स्वः ग्याय । प्रसवेऽश्विनोः । परमेष्ठ्यभिधीतः । सुचीवेति । स्वरितपरे यथा स्वाहा स्वर्णार्कः ॥ इत्येवमादयः ॥ "उभयवान्स्वरितः ॥ ६ ॥ ऊर्ध्वाधो भागे निष्पन्नः स्वरः स्वरितसञ्ज्ञः स्यात् । यथा स्वः । धान्यमसि ॥ अथ स्वरितस्यैवान्तर्भेदा अष्टौ स्वरा उच्यन्ते ॥ तथा च याज्ञवल्क्यः । अष्टौ स्वरान्प्रवक्ष्यामि तेषामेव च लक्षणम् ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च तथाऽपरः ॥ १३ ॥ तैरोव्यञ्जनसञ्ज्ञश्च तथा तैरोविरामकः ॥ पादवृत्तो भवेत्तद्वत्ताथाभाव्य इति स्वराः । १४ । इति । तत्र प्रत्येकलक्षणमुच्यते । तथा च प्रातिशाख्ये ॥ एक पदे नीचपूर्वः सयवो जात्यः ॥ एकस्मिन्पदे नीचपूर्वोऽनुदात्तपूर्वो यकारेण वा सहितो जात्यः स्वरः प्रत्येतव्यः । नीचपूर्व इति स्वरवद्धि-

ग्रेयणम् । अपूर्वोऽपि भवति । नीचपूर्वो यथा । धान्यमसि । कन्याऽइव । अपूर्वो यथा स्वर्द्देवेषु । तथा च याज्ञवल्क्यः । एकपदे नीचपूर्वः सयवो जात्यइष्यते ॥ अपूर्वोऽपि परस्तद्वद्धान्यं कन्या स्वरित्यपि ॥ १५ ॥ उदात्तादयः परे सप्त ॥ ७ ॥ उदात्तादयः परे सप्त स्वराः प्रत्येतव्याः । अभिनिहितक्षैप्रप्रश्लिष्टतैरोव्यञ्जनतैरोविरामपादवृत्तताथाभाव्याः ॥ चयो नीचस्वरपराः ॥ ८ ॥ अभिनिहितक्षैप्रप्रश्लिष्टा नीचस्वरपराः ॥ एदोद्भ्यामकारो लुगभिनिहितः ॥ ९ ॥ एकारौकाराभ्यामुदात्ताभ्यामकारोऽनुदात्तो यत्र लुक् लुप्यते तत्राभिनिहितः स्वरो भवति । यथा तेऽग्नस्याम् । तेऽवन्तु । वेदोऽसि । सुपोऽसि । तथा च याज्ञवल्क्यः । एदो आभ्यामुदात्ताभ्यामकारो रिफितश्च यः ॥ अकारो लुप्यते यत्र तं चाभिनिहितं विदुः ॥ १६ ॥ अस्यापवादः । न देवेशेऽभवति ॥ १० ॥ देवेशइत्ययमेकारः अभवदित्यस्याकारे लुप्तेऽप्यभिनिहितस्वरितो न भवति । यथा देवेशेऽभवत् ॥ युवर्णौ यवौ क्षैप्रः ॥ ११ ॥ इश्च उश्च यु युवर्णौ उदात्तौ अनुदात्ते स्वरोदयौ यकारवकाराभ्यां यथासङ्ख्येन युक्तौ यदा तदा क्षैप्रस्वरो भवति । यथा त्रिअम्बकम् । त्र्यम्बकम् । वाजी अर्व-

न् । वाज्यर्वन् । नु इन्द्र । न्विन्द्र । इ अग्नः । अग्नः । तथा च याज्ञवल्क्यः । इवर्णौ यदोदात्तावापद्येते यत्रौ क्वचित् ॥ अनुदात्ते परे नित्यं विद्यात्क्षैप्रस्य लक्षणम् ॥ १७ ॥ इवर्णेऽउभयतो ह्रस्वः प्रश्लिष्टः ॥ १२ ॥ ह्रस्वइकार उदात्तः परश्च ह्रस्वइकारोऽनुदात्तस्तयोः परस्परप्रश्लिष्टे प्रश्लिष्टस्वरो भवति । यथा अभि इन्धताम् । अभीन्धताम् । स्रुचीव । तथा च याज्ञवल्क्यः । इकारो दृश्यते यत्र इकारेणैव संयुतः ॥ उदात्तश्चानुदात्तेन प्रश्लिष्टो भवति स्वरः ॥ १८ ॥ स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः ॥ १३ ॥ उदात्तात्पूर्वमात्परो यः स्वरो व्यञ्जनयुतः स तैरोव्यञ्जनसञ्ज्ञकः स्वरो भवति । यथा इडे । रन्ते । तथा च याज्ञवल्क्यः । उदात्तपूर्वं यत्किञ्चिद्व्यञ्जनेन च संयुतः ॥ एष सर्वबहुस्वारस्तैरोऽव्यञ्जनसञ्ज्ञकः ॥ १९ ॥ उदवग्रहस्तैरोविरामः ॥ १४ ॥ उदात्तावग्रहस्तैरोविरामसञ्ज्ञकः स्यात् । अयं च समस्तपदेषु भवति । अवग्रहवचनात् । अवग्रहाभावे तु तैरोव्यञ्जन एव । यथा गोपताविति गो । पतौ । यज्ञपतिमिति यज्ञ । पतिम् ॥ तथा च याज्ञवल्क्यः । अवग्रहात्परो यस्तु स्वरितः स्यादनन्तरम् ॥ तैरोविरामं तं विद्या-

रः ॥ १५ ॥ स्वरयोरन्तरं विवृत्तिरुच्यते । तया ल-
क्ष्यतइति विवृत्तिलक्षणः स पादवृत्तसञ्ज्ञो भवति ।
विवृत्त्या व्यवहित इत्यर्थः । यथा ध्रुवा असदन् । ध्रु
वाऽअसदन् । का ईम् । काऽईम् । तथा च याज्ञव-
ल्क्यः । स्वरे च स्वरिते चैव विवृत्तिर्दृश्यते यदि ॥
पादवृत्तो भवेत्स्वारः श्रियऽआदित्यैति निदर्शनम् ॥
२१ ॥ स्वरयोरन्तरे काले विवृत्तिर्यत्र दृश्यते ॥ स स्वा-
रः पादवृत्तः स्यात्काऽईमिति निदर्शनम् ॥ २२ ॥ उ-
दात्ताद्यन्तो न्यवग्रहस्ताथाभाव्यः ॥ १६ ॥ उदात्तादिरु-
दात्तान्तो नीचावग्रहस्ताथाभाव्यसञ्ज्ञकः स्वरो भव-
ति । यथा तनूनप्त्रऽइति तनू । नप्त्रे । तनूनपादि-
ति तनू । नपात् । तथा च याज्ञवल्क्यः । उदात्तान्त-
रयोर्मध्ये भवेन्नीचस्त्ववग्रहः ॥ ताथाभाव्यो भवेत्स-
ध्यस्तनूनप्त्रे निदर्शनम् ॥ २३ ॥ केषां चिन्मते ना-
ष्टमस्तु ताथाभाव्यः, कम्परूपस्य ताथाभाव्यस्य वाजस-
नेयिनां संहितापाठे निराकृतत्वात् । उक्तं च माध्य-
न्दिनशिक्षायाम् । औज्जिहायनकैर्माध्यन्दिनमतानु-
सारिभिः । अवग्रहोयदा नीचउच्चयोर्मध्यतः क्वचित् ॥
२४ ॥ ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् ॥
पदपाठे भवत्येव कम्पो नाम स्वरस्तथा ॥ २५ ॥ इत्यष्टौ

स्वराः सोदाहरणा व्याख्याताः ॥ ऋजुं निहत्य अणि-
हन्यतऽउदात्ते ॥ १७ ॥ ऋजुं स्वरितस्वरं निहत्य ह्र-
स्वमनुदात्तवत् । ततो ऽत्यन्तं निहन्यते नीचैः क्रि-
यते जात्याभिनिहितक्षैप्रप्रश्लिष्टा उदात्ते परभूते ।
यथा स्वः द्यौरिव । स्वर्द्यौरिव । प्रसवे अश्विनोः ।
प्रसवेऽश्विनोः । नि अन्निणम् । न्यन्निणम् । सुचि
इव । स्रुचीवेति । उदात्त इति कस्मात् । धान्यम-
सि । वैष्णव्यौ । प्रचयस्वरलक्षणमाह । स्वरितात्परम-
नुदात्तमनुदात्तमयमेकमनेकं वा ॥ १८ ॥ स्वरितात्परम-
नुदात्तमेकमनेकं वाऽक्षरमुदात्तवत् । एकश्रुत्या उच्चा-
रणीयं स्यात् । अयमेव प्रचयः प्रचितः प्रचो निचित
उदात्तमयइति वैदिकैर्व्यवह्रियते । हस्तं तु नासिकाग्र-
सम्मितं कृत्वा प्रदर्शनीयः । प्रचयन्नासिकाग्रतइति-
याज्ञवल्क्यशिक्षावाक्यात् । यज्ञपतिः । अघाऽऽघऽऽग्निर्ष-
यः ॥ नोदात्तस्वरितोदयम् ॥ २० ॥ स्वरितात्परमनु-
दात्तं उदात्ते स्वरिते वा परे प्रचयं न स्यात् । इ६० 
हस्व मा । तत्रस्मि विष्णो । सातन्त्यॅञ्छिदरव्यम् ॥
उदात्तवानुदात्तः । स्वरितवान्स्वरितः । यत्र स्व-
रद्वयस्य प्राप्तौ सत्यां विप्रतिषेधऽउत्तरस्वरत्व-
द्भवति । यथा स्तनवेऽग्ने । अद्रद्युत्येऽवसे ॥

स्वरविधायकं शास्त्रम् ॥ अथ स्वरसन्धिरभिधीयते ॥
सं० हितायाम् । १ । अधिकारोऽयम् । पदान्तप-
दाद्योः सन्धिः । २ । यदत्र सन्धिकार्य्यमुच्यते तत्प-
दान्तपदाद्योः स्यात् ॥ स्वरे भाव्यन्तस्थाम् । ३ । अ-
कारवर्ज्जो भावी । इत्यनेन सूत्रेण भावीसञ्ज्ञोक्ता ।
ते भावीसञ्ज्ञका इ उ ऋ ऌ स्वराः स्वरे परे अन्त-
स्था यवरलाः क्रमश आपद्यन्ते । उदाहरणं यथा पुना-
त्वग्निश्छन्द्रेण । वाय्वश्वी । वेत्त्वाज्यस्य । विभुर्सौ-
त्रा प्रभूः पित्रा । ऌकारोदाहरणं नास्ति संहितायाम्
म् ॥ सन्ध्यक्षरमयवायावम् । ४ । सन्ध्यक्षरसञ्ज्ञकाः
स्वरा एओ ऐऔ स्वरे परे अय् अव् आय् आव् ए-
तानादेशानापद्यते । यथा इन्द्रएहि । अयादेशे
कृते "यवयोः पदान्तयोः स्वरमध्ये लोपः । ५ । इयोः
स्वरयोर्मध्ये विद्यमानयोः पदान्तयोर्य्यकारवकारयो-
र्लोपः स्यात् । सरस्वत्याऽइन्द्राय । विष्णो एते इति
स्थिते अवादेशे कृते लोपे च पूर्वसूत्रेण प्राप्तेऽग्रि-
मसूत्रेण निषेधः कृतः ॥ न वकारस्यासस्थान एकेषा-
म् । ६ । स्वरयोर्मध्ये विद्यमानस्य वकारस्य पदान्त-
स्य लोपो न स्याद्भिन्नस्थाने स्वरे परे, यथा विष्णावे-
ते । आनन्दनन्दावाण्डौ । असस्थानइति किम् । वि-
ष्णाऽउरुगाय । ऊरू पादाऽउच्येते ॥ कारव्यऽऋकारे ऋ

सम् । ७ । ऋवर्ण्य स्वरऋकारे परे ह्रस्वं स्वर: द्यते । त्वऽऋभुमती ॥ सिर्ठ० सवर्णे दीर्घम् । सिमृसञ्ज्ञकः स्वरः सवर्णे परे पूर्वः परस्य एकं मापद्यते । यथा नारातये । स्वाङ्गाग्नये । यौ म् । पचन्तूपे । अत्र स्वरे भाव्यन्तस्थामिति विप्रतिषेधसूत्यनेन परत्वादिदमेव भवति ॥ ऋव र्द्विवर्णऽएकारम् । ८ । ऋवर्ण्यात्परश्चवर्णपूर्वः प कारमापद्यते । जयेन्द्राय । एदम् ॥ उवर्णे ओ म् । १० । ऋवर्ण्यात्परउवर्णः पूर्वस्य एकमोकार पद्यते । इन्द्रोर्जम् । प्रोहामि ॥ सन्ध्यक्षर ऐ रौकारौ । ११ । ऋवर्ण्यात्स्वरात्परं सन्ध्यक्षर एतौ ऐकारौकारौ आपद्येते । यथा भाजायैष इन्द्रैवेन्द्रम् । ओजिष्ठौजिष्ठः । प्रौक्षन् ॥ समुद्र मँस्वेमँस्वोऽग्निति च । एते निपात्यन्ते । अन्ल प्राप्तस्य अन्यथोच्चारणं निपातनम् । यथा अपां समुद्रस्येमन् । अपान्वेमन् । अपान्वोऽग्नन् ॥ परकालः पूर्वकाले पुनः । १२ । जातः परकालो धिः पूर्वकाले विधौ प्राप्ते सत्यसिद्धः स्यात् । तऽ इ भुवन्तु । पादाऽउच्यते । अराध्याऽएदिधिषुःपा म् । राध्याऽ कृत्तः । अत्र यवयोः पदान्तयोरित्य परकालत्वात्तस्मिञ्जाते पूर्वकालं यथायथं प्राप्तं

न्विकार्यं न भवति ॥ आरमृकारोऽष्टमात् । १३ । अष्टमात्परमृकारः पूर्वस्य एकमात्रामापद्यते । करश्च ऋकार इत्यस्यापवादः । यस्यावश्यं प्राप्तौ सत्यां यो विधिरारभ्यते स तस्यापवादः, यथा स्वपनमार्त्यै ॥ एदोद्भ्यां पूर्वमकारः । १४ । एदोद्भ्यां परो अकारः पूर्वस्य एकमेकारं ओकारं वाऽऽपद्यते । एतत्प्रकरणे यानि विसर्गान्तानि पदानि तेषां "सर्वो अकार ओकारं" इत्यनुवर्त्तमाने "अकारे चे"ति वक्ष्यमाणसूत्रद्वयेन च ओकारान्तत्वम् । उदाहरणं यथा अग्नयेऽनीकवते । अग्नेद्व्वायोऽग्नीतम ॥ प्रकृतिभाव ऋक्षु । १५ । ऋक्षु नियताक्षरच्छन्दस्सु मन्त्रेषु एदोद्भ्यामपरो अकारः प्रकृत्या भवति । एदोद्भ्यामित्यस्यापवादः । यथा गर्भेऽअन्तः । व्वायोऽअस्मिन् ॥ यजुष्षु च । १६ । अनियताक्षरेषु अविशेषेण एकारौकाराभ्यां परः अकारः पूर्वस्य एकारमोकारं वाऽऽपद्यते । यथा अग्रेपुवोऽग्रे । च मेऽपानः । चकारादृच्यपि क्वचित् । योऽसावादित्ये पुरुषः सोऽसावहम् ॥ का भुवोती सदना होतारा ज्या स्वधा पृथिवी प्रतिमेमसदन्नश्चामाक्रमोर्द्ध्वमियमवस्तादुतास्विषु ॥ १७ ॥ कादीनि नव पदानि यथासङ्ख्यं इमादिषु नवसु पदेषु प्रकृत्या भवन्ति । का-

ऽर्द्धम् । भुवाऽअसदन् । ऊतीऽअश्याम । सदनाऽऋत-
स्यं होताराऽऊर्द्धम् । ज्याऽइयम् । स्वधाऽअवस्तात् ।
पृथिवीऽउत द्यौः । प्रतिमाऽअसि ॥ प्रगृह्यं च स्व-
रे ॥ १८ ॥ प्रगृह्यसञ्ज्ञकं पदं स्वरे परे प्रकृत्या
भवति । इन्द्राग्नीऽ अपात् । इन्द्रवायूऽ इमे । शिप्रे-
ऽअवेपयः । अस्मेऽआरात् । त्वेऽइषः । अमीऽअ-
न्यः ॥ उकारोऽपृक्तोऽस्पर्शात् ॥ १९ ॥ पूर्वेण भावे
नियमार्थं वचनम् । अपृक्तउकारः स्पर्शात्परस्त्वभाव
एव प्रकृत्या । एतवाऽउऽअग्नि । अस्पर्शात्किम् । त-
दुइन्तिके । सम्वतद्धामि ॥ न रोदसीमे ॥ २० ॥
रोदसी इत्येतद्द्विवचनान्तं पदमपि प्रकृत्या न भव-
ति इमे शब्दे परे । रोदसी मे ह्ये ॥ इत्यष्टौ स्वराः
सोदाहरणा व्याख्याताः । अथाङ्गुलिभिः प्रदर्शनीयवि-
षया व्याख्यायन्ते । तत्र व्यञ्जनानामिमे धर्माः सन्ति
छ्रीतस्मात्कारणादादौ व्यञ्जनसन्धिरुच्यते । तकारव-
र्गश्चकारवर्गे चकारवर्गम् । १ । तकारादयः पञ्च च-
कारादि पञ्चान्यतमे वर्णे परे चकारादीन्यापद्यन्ते ।
अत्र स्थान्यादेशयो र्यथासङ्ख्यम् निमित्तकार्यिणोस्तु
न "शकारे चे"त्यस्याप्येतत् । सूत्रशेषत्वेन निमित्तानां
पठत्वात् । योगविभागस्तु तावत एवोत्तरसूत्रेऽनुवृ-
त्त्यर्थः । यज्ञाहम् । आच्छच्छन्दः । अनूजेषम् । अस्तू-

श्नयतु ॥ शकारे ॥ २ ॥ शकारे च परे तवर्गश्चवर्गमापद्य-
ते । अद्रिश्याऽश्मश्शुभिः ॥ परश्चास्पर्शपरश्छम् ॥ ३ ॥
तवर्गात्परः शकारश्छकारमापद्यते स्पर्शपरो न चेत् ।
चात्पूर्वश्चवर्गम् । यच्छूद्रे । कुञ्चाऽच्छकपिञ्जडैः । अस्प-
र्शपरः किम् । पूर्वस्य चोदाहरणं बोद्धाम् ॥ नुः । ४ ।
अधिकारोऽयम् ॥ अनुनासिकमुपधा । ५ । अयम-
धि तथा ॥ चछयोः शम् । ६ । चकारे छकारे च प-
रे नकारः शकारमापद्यते । उपधा चानुनासिकम् ।
ताँश्चकर्थ । जटायां अवँश्छिन्त्स ॥ तथयोः सम् । ७ ।
तकारे थकारे च परे नकारः सकारमापद्यते । उप-
धा चानुनासिकम् अस्माँस्ते । पशूँस्तान् ॥ दधन्वा-
न्स्वत्रान्यकारे लोपम् । ८ । अनयोर्नकारो यकारे प-
रे लोपमापद्यते । नाचानुनासिकोपधा । उक्तं च व-
सिष्ठशिक्षायाम् । स्वराणामानुनासिक्यं प्रतिजानन्ति
सर्वदा । वर्जयित्वा तमाकारं यत्र लोपो विधीयते ।
दधन्वा यः । स्ववायातु ॥ रयिष्टधे च । ९ । रयिष्टधे
परे नकारो लोपमापद्यते । पीवोऽअन्नारयिष्टधः ॥
नॄन्पकारे विसर्जनीयम् । १० । नॄनित्ययं नकारः प-
कारे परे विसर्जनीयमापद्यते । अनुनासिका चोप-
धा । ॄँःऽ पाहि ॥ ऋतून्परिधीन्क्रतून्वनस्पतीन्त्स्व-
रे रेफम् । ११ । एतेषां नकारः स्वरे परे रेफमाप-

द्यते । अनुनासिका चोपधा । शतूँ १ ॥ रप । परि-
धीँ १ ॥ रपोर्णु । क्रतूँ १ ॥ रनु ॥ एते ह्येकार्द्धमात्रिका
भवन्तीति पाराशरेणोक्तम् ॥ आकारोपधो यकार-
म् । १२ । आकारोपधो नकारो यकारमापद्यते स्वरे
परे अनुनासिका चोपधा । याँ २ ॥ ऽआवहः । अत्र
यवयोरित्यनेन लोपेऽपि "न परकालः पूर्वकाले पुन"-
रित्यनेन तस्यासिद्धत्वात्प्रकरणान्तरस्थत्वाच्चानुनासि-
कवर्जनं न भवति ॥ स्पर्शोऽपञ्चमः स्वरघौ तृतीय-
म् । १३ । प्रतिवर्गमाद्याः स्वरे घिसञ्ज्ञके च परे
वर्गतृतीयमापद्यन्ते । ऋधगित्था । वेडसि । तदि-
द्वासम् । सङ्क्रमोदाहरणं । अनुष्टुबेवः । क्षर्गसि ।
राडयन्ती । तस्माद्वज्रात् । त्रिष्टुब्जगती । अप-
ञ्चमः किम् । युङ्ङसि । अस्मिन्यज्ञे ॥ पञ्चमे पञ्चम-
म् । १४ । अपञ्चमः स्पर्शः पञ्चमे स्पर्शे परे पञ्च-
ममापद्यते । वाक्माध्या । वाङ्माध्या । यःमे च्छि-
द्रम् ॥ हश्च तस्मात्पूर्वचतुर्थम् । १५ । अपञ्चमात्परो
हकारः पूर्वस्य चतुर्थमापद्यते चात्पूर्वस्तृतीयम् । स्वा-
ग्घुतः । समसुस्तोद्धृदः । अवाड्ढव्यानि । अपञ्चमा-
त्किम् । जीमूतान्हृदयौपशेन ॥ "अनुस्वारꣳ रो-
ष्मसु मकारः । १६ । मकारो रेफे ऊष्मसु च परे-
ऽनुस्वारमापद्यते । "अनुस्वारस्य ꣳमित्यादेशः प्रा-

षसङ्करेफेषु"। तेषामनुस्वारादीनामङ्गुलिभिः प्रका-
रो दर्शितवान्याज्ञवल्क्यः। मुष्ट्याकृतिर्मकारे तु नका-
रे तु नखग्रहः। ककारान्ते टकारान्ते ङ्णोऽथोऽङ्गु-
लिनामनम्। १। पञ्चाङ्गुल्यं पकारे तु तकारे कुण्ड-
लाकृतिः। ऊर्ध्वक्षेपाच्च योष्मास्यादधःक्षेपाच्च यो भ-
वेत्। २। एकैकामुत्सृजेद्वीरः स्वरिते तूभयं क्षि-
पेत्। स्वरितं यद्भवेत्किञ्चित्तवकारोष्मकं ततः।
दीर्घं वा यदि वा ह्रस्वं निक्षेपदुभयोरपि॥ ३॥ जात्ये
च स्वरिते चैव वकारो दृश्यते यदि॥ कर्त्तव्यस्तूभयोः क्षे-
पो व्यायव्यैरिति दर्शनम्॥ ४॥ तथा च लघु-
माध्यन्दिनीयशिक्षायाम्। कनिष्ठामोचनं कुर्या-
न्नीचे च प्रचये सति। नमः कूप्याय प्रथमो द्वितीयो
जाग्रतस्तथा। १। तर्जनीमोचनं कुर्यादुदात्ते तु वि-
सर्गके। देवो घर्मस्तथा ह्रस्वे स्वरिते तूभयं क्षिपे-
त्। २। अश्वो मर्त्यो भवेद्भव्यं स्वारे दीर्घे कनि-
ष्ठिकाम्। उभयोरपि ह्रस्वे च वकारे स्वरिते स-
ति। ३। दीर्घेऽपि चोभयोः क्षेपइति शाक्तव्यवस्थि-
तिः। अस्यार्थः। मकारे मुष्टिः। नकारे अङ्गु-
ष्ठेन तर्जनीनखग्रहणम्। ककारे टकारे ङकारे,
णकारे पदपाठे दृषद्वस्वित्यादौ च तर्जनीमध्ये ना-
मयेत्। पकारे पञ्चाङ्गुलिमेलनम्। तकारे कुण्डला-

रे विसर्गे तर्जन्याः प्रसारणम् । अनुदात्तात्प्रचयाच्च प-
रे कनिष्ठिकायाः प्रसारणम् । ह्रस्वात्स्वरितात्परे चो-
भयोस्तर्जन्यकनिष्ठिकयोः प्रसारणम् । दीर्घात्स्व-
रितात्परे विसर्गे कनिष्ठिकायाः क्षेपः । वकारयुक्ताद्दी-
र्घादपि परे चोभयोः । यकारयुक्ताज्जात्यस्वरिताद्दी-
र्घादप्युभयोः । इत्यङ्गुलिप्रदर्शनीयविषया निरूपि-
ताः ॥ अनुस्वारविषयो व्याख्यायते ॥ अनुस्वारꣳ रो-
ष्मसु मकारः । १ । मकारोऽनुस्वारमापद्यते रेफसंहि-
तोष्मपरेषु । यथा अपाम् रसेन । अपाꣳ रसेन । त्वा-
म् । शम्बन्तः । त्वाꣳ शम्बन्तः । देवम् सवितारम् । दे-
वꣳ सवितारम् । उरुम् हि । उरुꣳ हि । तथा-
च प्रातिशाख्ये । अनुस्वारस्य ꣳमित्यादेशः शषसह-
रेफेषु, तस्य त्रैविध्यमाख्यातं ह्रस्वदीर्घगुरुभेदैर्दीर्घा-
त्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः । अ-
नुस्वारस्य स्थानेꣳ इत्यादेशो भवति शषसहरेफेषु
परेष्विति शेषः । यथा विꣳशत् । हवीꣳषि । प-
याꣳसि । दृꣳह्स्व । सꣳरायः । ह्रस्वादक्षरात्परो
दीर्घः । गुरौ परे नाम संयुक्ताक्षरे परे गुरुर्भवति ।
क्रमेणोदाहरणानि । दीर्घात्पराद्ध्रस्वो यथा । पृथि-
व्याꣳ शतेन । यजूꣳषि । सहस्वाꣳसम् । अङ्क्ताꣳ ह-

विषा । द्रुषाꣳ रयीणाम् । ह्रस्वात्परो दीर्घो यथा चि-
ठꣳ महाम । सर्वꣳ षडिति । भूयासꣳ सुगृहप-
तिः । सꣳ रायस्पोषेण । गुरौ परे गुरुर्यथा । भेष-
जꣳ श्रिया । दꣳष्ट्राभ्याम् । सोमानꣳ स्वरणम् । चि-
ꣳश्युसि । ऋकारसंयोगे परे दीर्घ एव भवति न तु
गुरुः । उक्तं च कात्यायनशिक्षायाम् । अनुस्वारस्य ठꣳ-
कार आदेशश्छन्दसि स्मृतः । ऊष्मरेफेषु परतस्तस्य
वैविध्यमुच्यते । १ । ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वो गुरौ
च परतो गुरुः । ऋकारपर ऊष्मान्तो दीर्घाद्दी-
र्घोऽपि जायते । २ । तथा चामोघनन्दिनीशिक्षायाम् ।
अनुस्वारो द्विमात्रः स्यादवर्णाव्यञ्जनोदये । ह्रस्वाद्वा
यदि वा दीर्घाद्देशानाꣳ हृदये यथा ॥ ३ । सꣳसृष्ट-
जित्सꣳसृष्टां संयोगे ह्रस्व त उपधा च दीर्घमापद्ये-
थः । अयानुस्वारेऽङ्गुलिप्रदर्शनविचारः लाक्षकस्य ।
म[illegible]कृतसर्वसङ्ग्रहह्रस्तस्वरप्रक्रियाग्रन्थे १ स्वरधौ ।
[illegible]न्याज्या क्षिप्रं स्याद्द्विलके लघौ । ४ धिसञ्ज्ञके
[illegible]प्रकरणस्यत्वाद्दीर्घे अनुस्वारे रनिलम् ।
[illegible]या निष्काश्या । द्विलके गु[illegible] ‘अङ्गरमकार-
[illegible]स्वारे क्षिप्रं स्यात् । क्षिप्रं नाद्यौरिव । “प-
कारिकायामेवोक्तम् । तर्जन्याः पृष्ठसंस्थि । “अनरणि” दूं-
ग्रनामितम् । तं क्षिप्रं हि विजानीयाज्जत्परत्वा”त्मामस्य

स्वरात्छकारे चकारेण सर्वत्र । ८ । स्वरः छकारे परे चकारेणागमिकेन स विधीयते पदादिमध्यान्तेषु । अच्छावदामसि । माच्छन्दः । जगतीच्छन्दः ॥ यस्यातिच्छायसच्छेति न । ९ । एतेषान्न । सहछन्दसः । अतिच्छायच्छिद्रा, यस्य छाया । ङ्नौ क्ताभ्याम् सकारे । १० । ङकारनकारौ यथासङ्ख्यं ककारतकाराभ्यां व्यवधीयेते सकारे परे ॥ प्राङ्क्सोमः । समुद्रान्त्समसृपत् । उदस्थाने लोपम् । ११ । उदः परः स्थानभक्तीयसकारो लोपमापद्यते । उत्थान । "तस्मादित्युत्तरस्यादे"रित्यस्मिन्सूत्रेऽस्यत्रहितस्येत्युक्तत्वात् । उहिव एस्थाने त्यत्र न सकारलोपो भवति । भाव्युपधस्य रिद्विसर्जनीयो, रेफे लुप्यते दीर्घश्चोपधा । १२ । भाविसञ्ज्ञोपधो रिफितस्य विसर्गो रेफे परे लुप्यते उपधा च दीर्घमापद्यते । वसुभीरुद्रैः । जटायामुदाहरणम् । अन्ताश्चक्रः । नीरयाऽसि । रुद्रैरुद्रः । धातूरायः ॥ रेफम् स्वरयोः । १३ । भाव्युपधो रिफितस्य विसर्गः स्वरे परे घिसञ्ज्ञके च परे रेफमापद्यते । अग्निरक्रमीत् । वायुरनिलम् । अग्निर्मूर्द्धा । त्वष्टुर्जामातः । अहर्जिन्व । "अहरभकारपर"मित्युक्तत्वात् । शुद्धान् प्रमन्होभ्यः । स्वर्द्यौरिव । "पदादिस्थाजित्पर"इत्युक्तत्वात् । स्वःर्क्षीय । "अनरस्त्री" इत्युक्तत्वात्स्वाय चारणाय च । "अजित्परत्वा"दास्य

निषेधः ॥ कण्ठ्यपूर्वो यकारमरिफितः । १४ । रिफित-
भिन्नः कण्ठ्यपूर्वो विसर्गो यकारमापद्यते स्वरे परे ।
य ऽइमा विश्वा । शुष्मा ऽओषधीनाम् । यवयोरिति
लोपः ॥ लोपन्धौ । १५ । अरिफितः कण्ठ्यपूर्वो विसर्गो
लोपमापद्यते धौ परे । देवा देवैः । अयक्ष्मा मा ॥ भूमे-
श्चाकारेऽष्टके । १६ । भूमिशब्दसम्बन्धी विसर्गो लोप-
मापद्यते अष्टकाकारे परे । भूम्या ददे ॥ सर्वो अकार ओ-
कारम् । १७ । ह्रस्वाकारपूर्वो अरिफितो विसर्गः सोपध
ओकारमापद्यते धौ परे । "लोपं धौ" इत्यस्यापवादः ।
देवो देवैः, देवो वः सविता ॥ अकारे च । १८ । अरि-
फितो ह्रस्वकण्ठ्यपूर्वो विसर्गः सपूर्व ओकारमापद्यते
अकारे परे । सुपो ऽसि । कृष्णो ऽसि ॥ ओरुरहश्च
रात्र्याम् । १९ । उरुरित्ययं रुद्रे अहरित्ययं रात्रिशब्दे
परे सपूर्व ओकारमापद्यते । ओरुद्राणाः । अहोरा
[illegible]योः ॥ चछयोः शम् । २० । विसर्गश्चछयोः शमापद्यते ।
इन्द्रश्च । प्रजापतिश्छन्दः ॥ तथयोः सम् । २१ । विसर्ग-
स्तथयोः समापद्यते । कस्त्वा । नमस्ते ॥ अविका-
रं० शाकल्यः शषसेषु । २२ । एषु विसर्गो विकारन्ना-
पद्यते शाकल्यमतेन । वायव्याः श्वेताः ॥ अग्नीषोमयोः
षष्ठी । वानस्पत्यः ॥ प्रकृत्या कखयोः पफयोश्च । २३ ।
कखयोः पफयोश्च परयोर्विसर्गः प्रकृत्या भवति । सिताः

छायवन्ति, ततः खनेम । व्यसो : पविचम् । य़ाः फ-
ल्गिनोः ॥ तस्मिँल्लुप्ते जिह्वामूलीयोपध्मानीयनासिक्या
न सन्ति माध्यन्दिनानाम् । २४। इति पाणिनीयसूत्रैः
प्राप्ताः प्रतिषेधा बोध्याः ॥ लुङ्मुदि जित्परे । २५।
जित्सञ्ज्ञके परे मुत्सञ्ज्ञके च परभूते विसर्गो लुप्यते ।
अम्नतास्तुताः। ऊर्ज्जस्त्य ॥ उपवसने पीवः। २६। अयं
विसर्गो लुप्यते उपवसने परे। पीवोपवसनानाम् ॥ स-
ओषधीमयोः । २७। स इति विसर्गो लुप्यते ओषधी-
शब्दे इमशब्दे च परे। सौषधीरनु। सेमान्नः॥ व्यञ्जने
च । २८। स इत्ययं विसर्गो लुप्यते व्यञ्जने परे। स
ते लोकः स पर्य्यगात् । स बोधि॥ स्य एष च। २९। स्यः
एषः इमौ विसर्गौ लुप्येते व्यञ्जने परे । स्यराट्यः ।
एषते। एषच्छागः॥ स्य व्याजी। एषस्य। इदं सूत्रद्वयं
"तथयोः स"मित्यादीनां बाधकम्। स्य व्याजी स बोधी-
त्यादौ "सर्वो अःकार ओकार" मित्यनेन पूर्वान्विधीन्बा-
धन्ते नोत्तरानिति न्यायेन "विप्रतिषेधऽउत्तरबलत्तव-
दल्लोपे"। ३०। इत्युक्तत्वादेतस्य बाधो मध्येऽपवादः प्रा-
प्तः अल्लोप इत्युक्तत्वान्न भवति ॥ अनितावध्याये। ३१।
अधिकारोऽयम्। विधीयमानमागमविकारादिकार्यमितौ
परे न भवति। उपस्थितं बिना इति परत्वासम्भवात् ।
स्थितोपस्थितस्य तु एकविषयत्वादन्तःपदविकारागमवि-

षयोऽयं निषेधः । अध्याये इत्यधिकारोऽवध्यर्थम् । अधिकारः किम् । तवस्तरमिति तवः । तरम् । इत्यादौ "तथयोः स"मित्यादि भवति । अध्याये किम् । गोव्यच्छमिति गो । व्यच्छम् । इत्यादौ "स्वरे भावी"त्यादि भवति । अयं निषेधो विकारवतः पदस्यैव स्थितोपस्थिते नान्यत्र तेन रायस्पोषद इति रायस्पोष । दे । अत्र रायः स्पस्इति सकारो भवति ॥ इति वच्चर्यायाम् । ३२ । पुनरुच्चारितं चर्चा । इतः परं पदं तत्र इतौ परे यथा न भवति तद्वदेव ॥ ककारपकारयोः सकारम् । ३३ । भाव्युपधः षकारम् । ३४ । भाव्युपधो विसर्गः षकारमापद्यते । परिशेषादकारादन्यपूर्वः सकारः ककारे च परे । अधिकारोऽयम् । उत्तरसूत्रेषु यथायोग्यमुभयोः सम्बन्धः ॥ आविर्निरिड इडाया वसतिर्वरिवः । ३५ । एतेषां विसर्गः ककारपकारयोर्यथायथं सकारं षकारं चापद्यते । आविष्कृणुष्व । अग्ने निष्पर । इडस्पदे । इडायास्पदम् । वसतिष्कृता । वरिवस्कृणोतु ॥ दिवोऽककुत्पृथिव्योः । ३६ । दिव इत्ययं विसर्गः कपयोः समापद्यते ककुत्पृथिवीशब्दौ वर्जयित्वा । दिवस्परि । दिवस्पुत्राय । दिवस्पृष्ठे । अककुदित्यादि किम् । दिवः ककुत् । दिवः पृथिव्याः ॥ रायः सहस्रपोषपुत्रयोः । ३७ । एतौ यथासङ्ख्यं पोषपुत्रयोः प-

रयोः सकारमापद्येते । रायस्पोषे । सहस्रस्पुषः ॥ तमसोऽपरस्तात् । ३८ ॥ कपयोरयं विसर्गः समापद्यते परस्ताच्छब्दं वर्जयित्वा । तमसस्परि । अपरस्तादिति किम् । तमसः परस्तात् ॥ तमसस्पृथिव्याम् । ३९ । अयं समापद्यते पृथिवीशब्दे । तपसस्पृथिव्याम् ॥ अह्नो रजसो रिषस्पृशस्पातौ । ४० । एते चत्वारः पाधातौ सकारमापद्यन्ते । अह्नस्पातु । रजसस्पाति । रिषस्पाहि । सुस्पृशस्पाहि ॥ अह्नस्कुर्विति च । ४१ । एतन्निपात्यते । सकर्माँ२ऽ ॥ अह्नस्कृ ॥ समानपदे च । ४२ । एकपदे विद्यमानो विसर्गः कपयोर्यथायथं सकारं षकारं चापद्यते इतौ परे चर्चायां च न ॥ श्रेयस्कर । तपस्पतिः । हविष्कृत् । चतुष्पात् । स्थितोपस्थिते । श्रेयः करेति श्रेयः कर । तपः पतिरिति तपः । पतिः । शाःपत्यमिति शाः । पत्यम् । हविष्कृदिति हविः कृत् । चतुःपादिति चतुः । पात् । इत्यादि भवति ॥ परावसाने । ४३ । अवसानस्थिते परिशब्दे परे विसर्गः समापद्यते । ओषधयस्परि । अवसाने किम् । हेडः परि ते दृशातु ॥ कविः करत्कृधिषु । ४४ । एतेषु विसर्गः कविशब्दे सकारं षकारं चापद्यते । वसुस्कविः । श्रेयस्करत् । पुनस्कृधि ॥ कृपीश कृधौ सकारम् । ४५ । कृपीशोरित्ययं विसर्गः कविशब्दे सकारमापद्यते । भाव्युप-

षत्वात्पूर्वसूत्रेण षकारे प्राप्ते विधिः। कृधीस्कृधि॥ सद्दो द्यौर्न्नमस्कृतं पितापथिषु । ४६ । सदइत्यादीनां त्रयाणां विसर्गः कृतमित्यादिषु यथायथं सं षं चापद्यते । येषामप्सु सदस्कृतम् । उपहूतो द्यौष्पिता । यश्च सप्रथा नमस्पथे ॥ पतिस्तालव्यस्वरोदये, पदे च । ४७ । तालव्यस्वरान्ते पतिशब्दे पदरूपे परे विसर्गः सकारमापद्यते । तालव्यस्वरोदयइति सम्भवाभिप्रायम् । ब्रह्मणास्पते । वाचस्पतये । वाचस्पतिम् । पदे किम् । "तस्मिन्निति निर्दिष्टे" इतिसप्तमीनिर्दिष्टवर्णविषयम् । अत्र चेदमेव ज्ञापकं पदावयवे व्यवस्थितस्यासम्भवात् । यतो जातः प्रजापतिः ॥ न परुषः परुषि । ४८ । परुषइत्ययं विसर्गः परुषि न सकारमापद्यते । "समानपदे चे"ति प्राप्तस्य निषेधः । परोऽहन्ती परुषः परुषः ॥ वाजपतिर्वासऽएदिधिषुरन्तःपर्शव्येनान्तःपार्श्व्यमिति च । ४९ । कपयोर्वाजपतिरित्यादीनां त्रयाणां विसर्गौ अन्तःपर्शव्येनेत्यादिपदद्वयसम्बन्धी च न विकारमापद्यते । वाजपतिः कविः, "कविः कर"दित्यस्य निषेधः । वासःपल्पूलीम् । एदिधिषुःपतिम् । अन्तःपर्शव्येन । अन्तःपार्श्व्यम् । "समानपदे चे"ति प्राप्तस्य निषेधः । इति चेति अनुक्तसमुच्चयार्थं तेन जातः पतिरित्यत्र न सकारः ॥ अह्नः पतौ रेफम् ।

५० । अह्नरित्ययं विसर्गः पतिशब्दे परे रेफमापद्यते । समानपदइत्यस्यापवादः । अह्नर्पतये । स्थितोपस्थिते तु अह्नः पतयऽइत्यह्नः । पतये ॥ परस्य मूर्द्धन्यम् ॥ ५१ ॥ अधिकारोऽयम् । परस्येति तऽआद्यादनाङ्स्वरादित्यस्मात्प्राक् मूर्द्धन्यमिति तमभि व्याप्य ॥ स्वर्धूः साएसह्नयोः ॥ ५२ ॥ स्वः धूः इमौ यथा संख्यं साम् सह इत्येतयोः रेफमापद्यते, परस्य मूर्द्धन्यम् । स्वर्षामषाम् । इतं धूर्षाह्नौ ॥ "विकारो यथासन्न"मिति ईषद्विवृतत्वात्षकारः । स्थितोपस्थिते स्वः सामिति स्वः । साम् । धूः सहाविति धूः । सह्नौ ॥ उकारन्दुडर्द ॥ ५३ ॥ दुरित्ययं विसर्जनीयः उकारमापद्यते परस्य मूर्द्धन्यम् । धिसङ्गात्वादसोष्मत्वान्निरनुनासिकत्वाच्च उकारः । परिते दूडभः । स्थितोपस्थिते दुइर्दभऽइतिदुः । दभः । अध्यायइत्युक्तत्वादुपस्थिते "रेफएस्वरघा"विति भवति, स्थिते तु न संहिताया अभावात् ॥ ओकारमितः सिञ्चतौ सोपधः ॥ ५४ ॥ इत इत्ययं विसर्गः पूर्ववर्णसहित ओकारमापद्यते सिञ्चतौ परे परस्य मूर्द्धन्यम् । परीतो षिञ्चता सुतम् ॥ इति विसर्गसन्धिकार्यम् ॥

## अथ विसर्गाङ्गुलिप्रदर्शनप्रकारमा-

ह भगवान्महर्षिर्याज्ञवल्क्यः ॥

हकारो नैव मन्तव्य इति शास्त्रव्यवस्थितिः । इति
वचनात्तत्स्वराग्रे तादृशस्वरानुकूलो विसर्ग उच्चार-
णीयो न हकारसदृश इत्युच्चारणकर्त्तॄशासनाद्यवस्था
बोध्या ॥ तत्राघादनाडम्बरात् ॥ ५५ ॥ आघाशब्दात्पर-
स्तकारो मूर्द्धन्यमापद्यते । स चेदाघाशब्द आडम्बरश-
ब्दात्परो न । दार्वाघाटः । चित्तस्संज्ञकत्वादसोष्मत्वाच्च
टः । स्थितोपस्थिते तु दार्व्वाघात इति दारु । आघातः ।
अनाडम्बरादिति किम् । शब्दायाडम्बराघातम् ॥ व-
नसदोऽवेटो रेफेण ॥ ५६ ॥ वनशब्दः सदशब्दे परे
रेफेण व्यवधीयते वनशब्दो वेट्शब्दात्परो न चेत् ।
भुरण्यवो वनर्षदो वायवः । स्थितोपस्थिते वनस-
द इति वन । सदः । अवेटः किम् । अप्सु षद्दे
वेड्वनसद्दे ॥ पत्यौ च सकारेण ॥ ५७ ॥ वनशब्दः प-
तिशब्दे सकारेण व्यवधीयते । वनस्पतिः शमिता
देवः । इदं शाखान्तरविषयम् । अत्र लेखनं तु सकारे-
णेत्यनुवृत्तिप्रदर्शनार्थं ॥ ऋतावरौ च पतिपरयोः ॥ ५८ ॥
ऋत अवर एतौ पति परयोः सकारेण व्यवधीयेते ।
तव वायवृतस्पते । तूणवद्भ्रममवरस्पराय । स्थितो-
पस्थिते तु ऋतपत इत्यृत । पते । अवरपरायेत्यवर ।

पराय ॥ तद्बृहतोः करपत्योस्तलोपश्च ॥५९ ॥ तत् बृहत् एतौ करपतिशब्दयोः प्रत्यययोर्यथासङ्ख्यं सकारेण व्यवधीयेते । पूर्वपदयोश्च तकारलोपो भवति । यथा तत् करान् । तस्क राँऽ२ ॥ उत । बृहत् पतिः ॥ बृहस्पतिः । परिष्कृते षकारेण ॥६०॥ परीत्ययं कृते परे षकारेण व्यवधीयते । परिष्कृताः शुक्राः । स्थितोपस्थिते तु परिष्कृताऽइति परि । कृताः ॥ चन्द्रे सुशकारेण ॥६१॥ सुशब्दः चन्द्रे परे शकारेण व्यवधीयते । उभेसुश्चन्द्र । स्थितोपस्थिते सुचन्द्रेति सु चन्द्र ॥ दुधुक्षन्धो ढकारम् ॥ ६२ ॥ दुधुक्षन्नित्ययं धकारो ढकारमापद्यते । बृहतोन्द्रुवन् । स्थितोपस्थिते दुधुक्षन्निति दुधुक्षन् ॥ भाविभ्यः सषर्ड० समानपदे ॥ ६३ ॥ भाविभ्यः परः सकार एकपदे विद्यमानः षकारमापद्यते ॥ षात्तथौ मूर्द्धन्यम् ॥६४॥ षकारात्परौ तथौ मूर्द्धन्यमापद्यते । प्रगृह्य गोष्ठानम् । परमेष्ठ्यभिधीतः । अप्स्वन्तरा सुषाव । भुवना सीषधाम । दुष्टरस्तरन् । तकारस्य टकारः । जित्संज्ञकत्वात्सोष्मत्वाच्च थस्य ठः । स्थितोपस्थिते तु । गोस्थानमिति गो । स्थानम् । परमेस्थीति परमेस्थी । दुस्तरऽइति दुः । तरः । सुसावेति सु । सावा । सीसधामेति सीसधाम । तस्मादित्युत्तरस्त्वव्यवस्थितस्य । तेन पिबेत् ट्त्वञ् तकारस्य मूर्द्धन्योऽन ॥ का-

नुस्वाराच्च तत्पूर्व्वात् ॥ ६५ ॥ भाविपूर्वादनुस्वारात्परः
सकारः षकारमापद्यते । तपूꣳष्यग्ने । पुरोडाशैर्हवीꣳ
ष्या । तत्पूर्वात्किम् । वामनाꣳसि ॥ कारेफाभ्यां च ॥
६६ ॥ ककाररेफाभ्यां च परः सकारः षकारमापद्यते
रत्नु । वनर्षदः । अनुस्वारात्ककाराच्च परस्य षत्वं व्या-
करणसिद्धम् । अत्र लेखनं तु हिꣳसीर्ऋक्सामयोरि-
त्यादिनिषेधस्य वक्ष्यमाणत्वात्प्राप्तिप्रदर्शनार्थम् ॥ नेः
सीदतेः ॥ ६७ ॥ नेः परः सदधातोः सकारः षकारमा-
पद्यते । इदं बर्हिर्निषीदत ॥ ससाद च ॥ ६८ ॥ नेः परः
ससादेति सकारः षकारमापद्यते । एतस्य सदधातु-
जत्वात्स्पष्टार्थम् । निषसाद धृतव्रतः ॥ ओकारात्सु ॥
६९ ॥ ओकारात्परः सुसकारः षकारमापद्यते । मोषू-
णः ॥ उश्चापृक्तात् । ७० । अपृक्तादुकारात्परः सुसकारः
षकारमापद्यते । ऊर्ध्वऽऊषुणः ॥ अभेश्च । ७१ । अ-
भेः परः सुसकारः षकारमापद्यते । अभीषुणः ॥
परेश्च सिञ्चतेः । ७२ । परेः परः सिञ्चतेः सकारः
षकारमापद्यते । परिषिञ्चन्ति ॥ अभेश्च । ७३ ।
अभेः परः सिञ्चतेः सकारः षकारमापद्यते । मि-
त्रावरुणावभ्यषिञ्चन् ॥ वेर्युदयः । ७४ । वेः परीभू-
तो यकारपरः सकारः षकारमापद्यते । विष्यास्या-
युषो न सह्यात् । युदयः किम् । विस्वः पश्य ॥ स्त्रे-

र्मिंयोदयः। ७५। ऋ्छेः परीभूतो सकारपरस्थकारपरश्च सकारः षकारमापद्यते। अस्ति ष्विष्ष्माते । आपो ष्वि ष्ठ ॥ द्यवेश्च । ७६ । द्यविशब्दात्परस्थकारोदयः सकारः षकारमापद्यते । मकारस्तसम्भवान्न सम्बध्यते । उपद्यविष्ठ ॥ नेस्त्यास्तनोः । ७७ । निशब्दात्परस्त्यास्तन्योर्धात्वोः सम्बन्धिसकारः षकारमापद्यते । निःस्त्यायताम् । निः स्तनिहि इति स्थिते "लुङ्सुदि जिह्वे" इत्यनेन विसर्गलोपे कृते सस्य षः । आप्यायतान्निष्ट्यायताम् । निष्टनिहि ॥ ततक्षौ । ७८ । नि इत्यस्मात्परः सकारः षकारमापद्यते ततक्षौ परे । तथयोरिति सस्य षः । स्वधया निष्टतक्षुः ॥ अनोः स्तुवन्त्याम् । ७९ । अनोः परः स्तुवन्ति सकारः षकारमापद्यते । अनुष्टुवन्ति पूर्वथा ॥ दुःष्वप्न्यम् । ८० । इदं कृतषत्वं निपात्यते । दुःष्वप्न्यर्ठ० सुव । स्थितोपस्थिते दुःस्वप्न्यमिति दुःस्वप्न्यम् ॥ वन्द्रारुस्मोक्षिः । ८१ । एतयोः सकारः षकारमापद्यते । इह यानि विसर्गान्तानि पदानि तेषां तथयोरिति सत्वे जाते षः । गृणाति वन्द्रारुष्टे । माकिष्टे व्यथिरादधर्षीत् ॥ सहेः पृतनायाः । ८२ । पृतनाशब्दात्परः सहेः सकारः षकारमापद्यते । पृतनाषाह्याय च । स्थि-

भाविपूर्वाद्प्राप्ते विधिः ॥ सधिरऽँशुरदितिः ।
८३ । एतेषां त्रयाणां सकारः षकारमापद्यते । अ-
राखन्ति सधिष्टव । अऽँशुरऽँशुष्टे । अदिति-
ष्टे ॥ वायुरग्निरग्नेरेकाक्षरे । ८४ । एतेषां त्रया-
णां सकारः एकाक्षरे पदे षकारमापद्यते । वायु-
ष्ट्वा पचतैः । अग्निष्टेऽधिपतिः । अग्नेष्ट्वा तेज-
सा । एकाक्षरे किम् । अग्निस्तिग्मेन । अग्नेस्ता-
नूः ॥ सकारपरे च । ८५ । भाव्युपधः सकारः स-
कारे परे एकाक्षरे पदे षकारमापद्यते । अग्नतष्य
धनुष्ट्वम् । सकारपरे किम् । सवितुस्त्वा प्रसवे ॥
मातृभिरर्चिभिः पायुभिर्वक्ष्णीः । ८६ । एतेषां
चतुर्णां सकारः षकारमापद्यते । सऽँ सृज्य मातृभि-
ष्ट्वम् ॥ शिवेभिरर्चिभिष्ट्वम् । अदब्धेभिः सवितः पा-
युभिष्ट्वम् । वक्ष्णीष्ट्वा॥ प्रकृत्या नानापदस्थे तका ।
८७ । अधिकारोऽयम् । अनु सन्तनोतु बृहस्प-
ति सुतस्य सुसमिद्धाय सुसन्दृशमभि सत्वाऽभिसंवि-
शन्तु सुसस्याऽअतिस्थूलम्मुसले पत्नी सँख्याजान् अ-
नुस्वताञ्जिसक्थ्यौ दिविस्पृशा हृदिस्पृशऽँ सीसँ-
ष्वसामाभ्यां तित्तिरिस्ते सीसेन सीसाः सीसं पशुस-
नि गोसनि प्रतिसद्दङ् प्रतिसद्दचासश्चतुस्त्रिऽँ शत् ।
८८ । एते षड्विंशत्सकाराः प्रकृत्या भवन्ति । हि-

ꣳसीरि "त्वचानुस्वाराच्चेति" प्राप्तिः । ऋक्सामेति
द्वये "वारेफाभ्यां चेति" । तित्तिरिस्ते सर्पाणामित्यत्र
'सकारपरे चेति'। अन्यत्र समानपदत्वात्। चतुस्त्रिꣳ-
शदिति किम् । धर्त्रञ्चतुष्टोमः । अत्र 'लुङ्सुदीति'
विसर्गलोपे 'भाविष्य' इति षत्वं भवति । वीर्य्यं पुनो-
ऽनुसन्तनोतु । बृहस्पतिस्सुतस्य । सुसमिद्धाय,
सुसन्दृशन्त्वा । अभिसन्त्वा सन्त्वोग्राः । देवाऽअभिसँ-
व्विशन्तु । सुसस्याः कृषीस्कृधि । अतिस्थूलं चातिकृ-
शम् । उलूखलमुसले । शँय्युना पत्नीसँय्याजान् । पु-
ञ्जिकस्थला च क्रतुस्थला । शितिकक्षोञ्जिसक्थः ।
बृहता दिविस्पृशा । भद्रꣳ हृदिस्पृशम् । एनꣳ
हिꣳसीः । ऋक्सामयोः शिल्पे । ऋक्सामाभ्याꣳ-
सन्तरन्तः । तित्तिरिस्ते सर्पाणाम् । सीसेन तन्त्रम् ।
हरिणीः सीसाः । सीसञ्च मे । प्रजासनिपशुसनि । गो
सनि । प्रति सदृङ् । प्रतिसदृक्षासऽएतन । चतुस्त्रिꣳश-
द्वाजिनः ॥ ऋकारेफाद्द्वयस्य । ८९ । ऋकारो रेफऽअ-
र इत्येतद्द्वयपरः सकारः प्रकृत्या । तिसृभिरस्तुवत ।
तिस्रश्च मे । व्वाचो व्विसर्ज्जनम् ॥ पृथिवि दिव्युपरि-
चर्षणिशकुनियासिभ्यः । ९० । एतेभ्यः षड्भ्यः सकारः
प्रकृत्या । पृथिवि सदन्त्वा । दिवि सदन्त्वा । उपरि स-
दो दुवस्वन्तः । चर्षणी सहाँव्वितु । शकुनि सादेन कृ-

म्यान् । अवयासिसीष्ठाः । इतिषत्वप्रकरणम् । ऋषरे-भ्यो नकारो णकारं० समानपदे, स्वरयवहकपैश्च । ८१ । ऋकारषकाररेफेभ्यः परः स्वरयकारवकारह-कारकवर्गपवर्गव्यवहितोऽपि नकारो णकारमापद्यते समानपदे । तस्मादित्युत्तरस्येत्युत्तरस्येत्युक्तत्वाद्व्यवधाने अप्राप्तवचनादेतैर्गतैर्यथासम्भवमिलितैश्च व्यवाये भव-ति नान्यैः । नृमणाः । पुरीषवाहणः । स्थितोपस्थिते तु नृमनाऽइति नृ । मनाः । पुरीषवाहनऽइति पुरीष । वाहनः । प्रवाहनऽइति प्र । वाहनः । एतैः किम् । र-श्मिना । रसेन । रुचानः । रथेन ॥ प्रनेति नुदाति हिनोमीनाम् । ८२ । प्रेत्यस्मान्नोनुदधात्वोर्हिनो-मिशब्दस्य च नकारो णकारमापद्यते । प्रणय देवा-व्यम् । प्रणुदानः । प्रहिणोमि ॥ प्रकृत्या पदा-न्तीयः । ८३ । पदान्तीयो नकारः प्रकृत्या भव-ति । पूषन् । अश्मन् । पितृन् ॥ निवनिन-सः प्रपीनम् । ८४ । ऋषरेभ्यो निवनिनसइत्येषां प्रपीनमित्ययं नकारः प्रकृत्या । धूम्रा बभ्रुनीका-शाः । ब्रह्मवनि त्वा क्षत्रवनि । वार्ध्रीनसस्ते । प्रपी-नमग्ने ॥ श्रीमनाऽइत्येके । ८५ । एकशब्दो मुख्य-वाची । अयं च निपात्यते । श्रीमनाः शतपयाः ॥ इ-न्द्राग्नी चित्रभानो वार्त्रघ्नन्दुः व्यास्यं ध्रुवयोनिः पुरोऽ-

नुवाक्याभिःपुरोऽनुवाक्याश्चर्म्मिम्नम् । ९७ । एतान्य-
ष्टौ निपात्यन्ते । इन्द्राग्न्योरुज्जितिम् । इन्द्रायाहि चि-
त्रभानो सुताः । इन्द्रस्य वार्त्रघ्नमसि । दुःष्वप्न्यं सु
व । ध्रुवक्षितिर्ध्रुवयोनिः । ऋचः पुरोऽनुवाक्याभिः ।
पुरोऽनुवाक्याभिः । पुरोऽनुवाक्यायाज्याभिः । साह्नो-
ऽभ्यश्चर्म्मिम्नम् ॥ तवर्गे च । ९८ । ऋषरेभ्यः परो
नकारः प्रकृत्या पवर्गे परे । तृम्पन्तु होत्राः । अवक्रा-
न्देन तानु । क्रन्दते ॥ षादनन्तरऋकारे । ९९ ।
षात्परो नकारः प्रकृत्या ऋकारे परे । उग्रस्त्वेष नृ-
म्णः ॥ निषण्णाय रथवाहणमिन्द्रऽएणं परिणीय-
ते समिन्द्रणऽउरुष्याणो रक्षा णः पुणः पूणःपुणा स
ख्या स्वर्णाश्मूरिणौ प्रणऽआयूंषि । १०० । एता-
नि नयोदश निपात्यन्ते । निषण्णाय । रथवाहणम् ।
इन्द्रऽएणम् । परिणीयते कविः । समिन्द्र णो मन-
सा । उरुष्याणोऽअघायतः । रक्षाणो ब्रह्मणस्पते ।
मोषूणऽइन्द्र । अभीषुणः । गोमदूषुणा सख्या । स्वर्णं
घर्मः । अश्मूरिणौ । निसन्नायेतिनि । सन्नाय । रथ-
वाहनमितिरथ । वाहनम् । इति णत्वप्रकरणम् ॥
दीर्घम् । १०१ । अधिकारोऽयम् ॥ अश्वरथिस्य मति
सुमति चारय इषिमेदिमेन्द्रिय धाय चित्रभङ्गुर-
वयुनाश्वस्य हृदयघुष्यत्तीस्थवताध्यर्द्धभाक्ता पुरुषाचि-

वकारे । १०२ । एते पञ्चविंशतिह्रस्वा दीर्घमापद्यन्ते वकारे परे । अश्वावतीम् । रश्मीवतीम् । मतीविदे । सुमतीवृधः । स्वाविद्भौमी । सुतावतः । व्यारयावृषन् । सेदिमावयम् । इन्द्रियावान् । धारयावसूनि । चित्रावसो । भङ्गुरावताम् । व्वयुनाविद्देकः । अश्वयशाविशस्ता । ऋतावानम् । अभीवर्त्तः । प्रावतावचः । अधीवासम् । अश्वीं व्विश्वानराय । शक्तीवन्तो गभीराः । इमाऽउत्वा पुरूवसो । स्थितोपस्थिते तु अश्ववतीमित्यश्व । वतीम् । रश्मिवतीमिति रश्मिवतीम् । मतिविदऽइतिमति । व्विदे । सुमतिवृधऽइतिसुमति । वृधः । स्वविदितिस्व । वित् । सुतवतऽइति सुत । व्वतः । वृषणवानिति वृषण वान् । इन्द्रियवानितीन्द्रिय । व्वान् । चित्रवसो ऽइति चित्र । वसो । भङ्गुरवतामिति । भङ्गुर । व्वताम् । व्वयुनविदिति वयुन । व्वित् । हृदयविधऽइति हृदय । व्विधः । ऋतवानमित्यृत । व्वानम् । अभिवर्त्तऽइत्यभि । वर्त्तः । अधिवासमित्यधि । वासम् । शक्तिवन्तऽइति शक्ति । व्वन्तः । पुरुवसोऽइति पुरु । व्वसो । शचीवसो । अन्यशाखीयमिदमुदाहरणम् ॥ नाश्ववद्धिरण्ययात् । १०३ । हिरण्यवच्छब्दात्परश्वइति शब्दरूपं वदित्येतस्मिन्परे न दीर्घमापद्यते । हिरण्यवदश्ववत् ॥ अभिविकखयेषं व्वी-

रविश्वश्वसह्नवाजयन्तेषु । १०४ । अभीत्ययं ह्रस्वो वि-
कखेऽभित्यादिषट्सु न दीर्घमापद्यते । अभि विकखये-
षम् । अभि वीरोऽअभिसत्वा । अभि विश्वे गृण-
न्तः । अभि वत्सन् । अभिह्नम् । अभिवाजयन्तः ॥
अश्वस्य व्वाजिन इति च । १०५ । अश्वस्येति ह्रस्वो
वाजिन इत्येतस्मिन्परे न दीर्घमापद्यते । अश्वस्य
व्वाजिनः । इति चेत्येवं विधान्योदाहरणसूचनार्थ-
म् । तेनाधिवक्तेति न दीर्घः ॥ विश्वसह्नभुवपुषवसु-
षु । १०६ । नेति नानुवर्त्तते । विश्वेत्ययं ह्रस्वः सह्ना-
दिषु चतुर्षु दीर्घमापद्यते । विश्वासाह्नमवसे ।
व्विश्वानराय व्विश्वाभुवे । उत व्विश्वापुषम् । ग-
न्धर्व्वस्त्वा व्विश्वावसुः । स्थितोपस्थिते तु । व्विश्व-
सह्नमिति विश्व । सह्नम् । व्विश्वभुवऽइति विश्व ।
भुवे । व्विश्वपुषमिति विश्व । पुषम् । व्विश्ववसुरि-
ति विश्व । व्वसुः ॥ तिष्ठाद्युदात्तम् ॥ १०७ ॥ आद्यु-
दात्तं तिष्ठेतिपदं दीर्घमापद्यते । तिष्ठा रथमधिय-
म् । तिष्ठा देवो न सविता । आद्युदात्तं किम् । आ-
तिष्ठ वृत्रहन् ॥ प्रवणह्नङ्गयासेषु ॥ १०८ ॥ प्रेत्ययं
ह्रस्वो वनादिषु त्रिषु दीर्घमापद्यते । प्रावणेभिः स-
जोषसः । प्राह्नङ्गा माह्नेन्द्राः । प्रायासाय । स्थितो-
पस्थिते प्रवणेभिरिति प्र । वणेभिः । प्रह्नङ्गाइति प्र ।

च्छङ्गाः । प्रयासायेति प्र । यासाय ॥ धारयाम योजा-
व सचस्व नुद मोषु जयतोकष्व रक्ष युञ्ज युच्छ म-
त्स्व पिबत गायता तु येन नकारे ॥ १०८ ॥ धारया-
मेत्यादयः षोडश ह्रस्वा नकारे दीर्घमापद्यन्ते । धार-
यामा नमोभिः । योजान्विन्द्र । अवानो देव्या धि-
या । सचस्वा नः स्वस्तये । प्रणुदा नः । मोषूणः । मो-
षु किम् । ऊर्ध्वऽऊषुणः । जयता नरः । उरुष्याणः ।
रक्षाणः । युञ्जानो मित्रावरुणा । यृच्छानः शर्म ।
मत्स्वथा नो विष्ण्वम् । पिबतानिरवहृयात् । गायता
नरः । आतू नः । आतु किम् । तु चेतुनो भवन्तु । ये-
ना नः पूर्व्वे ॥ भव च ॥ ११० ॥ अयं ह्रस्वो दीर्घमाप-
द्यते नकारे परे । भवा नः ॥ सचावरूत्थ्यवाजस्य
पायुषु च ॥ १११ ॥ भवेत्ययं ह्रस्वस्सचादिषु चतुर्षु
दीर्घमापद्यते । भवासचा । भवा वाजस्य । भवा पा-
युः ॥ नावनयामि ॥ ११२ ॥ अवेत्ययं ह्रस्वो नयामि-
शब्दे परे न दीर्घमापद्यते । अवनयामि ॥ अष्टकृत्तः
सौ ॥ ११३ ॥ उकारः सौ परे दीर्घमापद्यते । महीमू
षु ॥ रथितकारनकारयोः ॥ ११४ ॥ रथीत्ययं ह्रस्वस्त-
कारनकारयोर्दीर्घमापद्यते । रथीतमम् । रथीनाँव्वा-
जानाम् । स्थितोपस्थिते रथितममिति रथि । तम-
म् । रथिनामितिरथि । नाम् ॥ अथोदारियशोच

पनय सादयर्ज्जु इषयन्तु सखन्वाघायारातिभवता यकारे ॥ ११५ ॥ पनयादयस्त्रयोदश ह्रस्वा यकारे दीर्घमापद्यन्ते । अद्यम० श्रथाय । उशादिया यज । बृहच्छोचा यविष्ठ्य । पनया युजम् । सादया यज्ञ-म् । ऋजूयताम् । इषायमाणाः । शत्रूयतो हन्ता । सखन्वा यत् । आघाये । अघायतः । अरातीयतः । ऋतायते । स्थितोपस्थिते तु श्रथयेति श्रथय । ऋजुयतामित्यृजु । यताम् । इषयमाणऽइति इ-ष । यमाणाः । शत्रुयतऽइति शत्रु । यतः । अघयत-ऽइत्यघ । यतः । अरातियतऽइत्यराति । यतः । ऋ-तयतऽइत्यृत । यते ॥ वहृवहृजोः ॥ ११६ ॥ व इत्ययं हृधहृजोर्दीर्घमापद्यते । वाहृधे । प्रवाहृजे । स्थितो-पस्थिते वहृधऽइति वहृधे । वहृजऽइति वहृजे ॥ अद्य तॐ° हकारचकारभवत हृणीमहे देवेषु ॥ ११७ ॥ अद्येत्ययं तमित्यादिषट्सु दीर्घमापद्यते । अद्यातम-स्य । तमिति किम् । अद्य तेऽअपरम् । अद्याऽऽवे-स । ह्वमद्या च । अद्या भवत । अद्या हृणीमहे । अद्या देवाः ॥ न होतरि ॥ ११८ ॥ अद्येत्ययं न होतरि दीर्घमापद्यते । अद्य होतारम् ॥ शृणुत त्विषि भजि भवत पिबत स्म तिष्ठ रक्षामकारे ॥ ११९ ॥ शृणुता-दिनव ह्रस्वा मकारे परे दीर्घमापद्यन्ते । शृणुत

ऽङ्गम् । अग्निम्भराय त्विषीमते । व्रातऽइवधृजी-
मान् । इदं शाखान्तरविषयम् । माध्यन्दिनानान्तु
दीर्घत्वादेव मतुप् । अतएवाचान्तःपददीर्घीभाव
इति स्थितोपस्थितं न । भवताम्रुडयन्तः । पिबामि-
त्यस्य । इता मरुतः । हिंम्मा मनवे । तिष्ठा मह्या-
ऽसि । रथा साकिः । स्थितोपस्थिते । त्विषिमतऽइ-
ति त्विषि । मते ॥ विश्वदेव्यसोमौ वत्याम् ॥ १२० ॥
एतौ ह्रस्वौ वतीशब्दे दीर्घमापद्येते । विश्वदेव्याव-
ती । सोमावतीम् । स्थितोपस्थिते विश्वदेव्यवती-
ति विश्व । देव्यवती । सोमवतीमिति सोम । वतीम् ।
वत्यामिति किम् । सोमवताम् ॥ उषसश्चोभिर्नक्तमीका-
रैकारौकारनकारेभ्यः ॥ १२१ ॥ नक्तोभिरित्यादि-
भिर्भ्य ईकारादिचतुर्भ्यश्च पर उष इत्ययं ह्रस्वो दी-
र्घमापद्यते । प्रकरणानुसारादन्त्यस्य व्याख्यानात् ।
नक्तोभिः उषासा नक्ता । नक्तोषासा । आयतीमुषा-
सम् । देवीऽउषासौ । उपाकेऽउषासा नक्ता । यो-
नाऽउषासा नक्ता । नऽउषासः । अव्यवहितस्यास-
म्भवाद्व्यवधानेऽपि । स्थितोपस्थिते उषसानक्तेत्युष-
सा । नक्ता । नक्तोषसेति नक्तोषसा । उषसमित्युषसम् ।
उषसावित्युषसौ । उषसऽइत्युषसः । एतेभ्यः किम् । अ-
न्यऽउषसाम् ॥ पूरुषोऽवसाने ॥ १२२ ॥ पूरुष इत्ययं

आद्दिर्दीर्घो निपात्यते अवसाने चेत् । सनवथ पूरुषम् ।
अवसाने किम् । उदैत्पुरुषः ॥ पूष्णो जङ्घीमस्तेष्वत्र ॥
१२३ ॥ अत्रेत्ययं ह्रस्वः पूष्णइत्यादिषु त्रिषु दीर्घमापद्य-
ते । अत्रा पूष्णः । अत्रा ते भद्राः ॥ नरः सप्तऽऋषी-
न्तऽआहुर्नियुद्भिष्षु यत्र ॥ १२४ ॥ यत्रेत्ययं ह्रस्वो
नरइत्यादिषु पञ्चसु दीर्घमापद्यते । यत्रा नरः ।
यत्रा सप्तऽऋषीन् । यत्रा नक्षत्रा । यत्रात-
ऽआहुः । तऽआहुः किम् । यत्र ते ययुः । यत्रा
नियुद्भिः ॥ अभिमातिपृतनासु सपत्नभूर्विश्वसमत्सुपृ-
तना व्रातेभ्यः सहेः ॥ १२५ ॥ अभिमातीत्याद्यष्टभ्यः
सह धातोर्ह्रस्वो दीर्घमापद्यते । अन्त्यस्यासम्भवादन-
न्त्यस्य । तत्र द्वयोः प्राप्तौ "सन्निकृष्टविप्रकृष्टयोः स-
न्निकृष्टस्येत्यादेः । अभिमातिषाहः । पृतनासु सास-
हिम् । सपत्नसाही । इतं भूर्षाहौ । विश्वासाहम-
वसे । समत्सु सासहः । पृतनाषाह्याय च । व्रातसा-
हाः । स्थितोपस्थिते अभिमातिसहऽइत्यभिमाति ।
सहः । ससहिमिति ससहिम् । सपत्नसहीति सप-
त्न । सही । भूः सहाविति भूः । सहौ । विश्वसह-
मिति विश्व । सहम् । ससहऽइति ससहः ।
पृतनासह्यायेति पृतना । सह्याय । व्रातसहाऽइ-

उक्थशब्दात्परः शसेर्ह्रस्वो दीर्घमापद्यते । उक्थशासश्चरन्ति । स्थितोपस्थिते उक्थशस इत्युक्थ । शसः ॥ एवाच्छवक्ष्माथ ॥ १२७ ॥ एतेषां चतुर्णां ह्रस्वा दीर्घमापद्यन्ते । संहिताऽधिकारादवसाने न । एवा नो दूर्वे । गिरिभ्याच्छावदामसि । च-क्ष्मा वयम् । अथा नऽइन्द्रः । एवशब्दोऽत्रोपमा-र्थ एव व्याख्यानात् । अवधारणार्थस्य तु न । तदेव शुक्रमा-म् । सऽएव जातः । अवसाने तु तानोऽअच्छ ॥ विद्मा सौत्रामण्याम् ॥ १२८ ॥ विद्मेत्ययं ह्रस्वो दीर्घमापद्य-ते सौत्रामणीमन्त्रान्वर्जयित्वा । विद्मा तेऽअग्ने । असौत्रामण्यां किम् । विद्म यँ २ ॥ ऽउ च न ॥ अधा-यदस्मग्नावायुषु ॥ १२९ ॥ अधेत्ययं ह्रस्वो दीर्घमापद्य-ते यदस्मग्नावायु एतान्वर्जयित्वा । अधासपत्ना-न् । अधाह्यग्ने । अयदित्यादि किम् । अधयत् । अधरस्म ते व्रजनम् । अधग्नाः । अधव्वायुम् ॥ पिबा-सोमं पिबा सुतस्य स्वामयो भुवो नूरणे शमीष्व मा-महानो मामहन्तामभीतम रीरिषो रीरिषत याभयन्ति हि ष्मा ते वर्द्धयारयिं शुधीहवञ्चरा सो-म स्वयवसिनी श्रोताग्रावाणो धर्षा मानुषः पाथा दिवो युद्धा हि गमया तमः सिञ्चता सुतं परीवा-पऽउक्था शस्त्राण्यत्ता हवींष्याच्या जानु चामाधे-

रयाम पितरा स्वधी बोधा मे विवृता वन्धमवता इवेषु
स्टणुधी गिरी रचा तोकं चर्षणीसहां चर्षणीष्टतो
येना समत्सु वनेमातऽऋष्टद्यामा ते शिक्षासखिऽभ्यस्त्वा
रथं दीया रथेनेता जयत वर्द्धया त्वं प्रब्रवामा इतस्मा-
जगन्था परस्यारश्मिमाहि पुरीतता ग्रीहाकर्णशुण्ठाक-
र्णौ प्रकृतिदीर्घावित्येके नौकाशा अनूकाशेन चक्रा-
ञुरसम्भिग्रकस्तरता सखायः सासह्वानपामार्गेभ-
याद्तऽऋतीहमभीषु सुष्टरीमा जुषाणो युजा देवान्ये-
ना पावकास्वायन्तो यदी सरमा स्वदया सुजिह्व नि-
पद्या दधिष्व सदतना रणिष्ट न भरा चिकि[illegible]न्त्साद-
या गविष्टावबाद्दद्द्रवा चायुनक्सृजा रराणः सादन्य-
मिति च ॥ १३० ॥ पिबासोममित्यादीन्यष्टसप्ततिरूपा-
णि छतदीर्घाणि निपात्यन्ते । यत्र तु पदद्वयपाठस्त-
त्र यथोक्तो दीर्घः । अन्यत्र तु एकपदस्थः । ग्रीहाकर्ण-
शुण्ठाकर्णौ प्रकृतिदीर्घौ । इति चकारोऽनुक्त-
समुच्चयार्थः । तेन यच्छ देवायुवम् । यच्छेति किम् ।
यज्ञपतिं देवयुवम् । पुरीततेति विभक्तिरविवक्षिता ।
पुरीतत् इत्यपि भवति । स्थितोपस्थिते शमिष्वेति
शमिष्व । ममहानऽइति ममहानः । ममहन्तामिति
ममहन्ताम् । अशितमेत्यशितम । रिरिषऽइति रि-

रिषः । रिरिषतेति रिरिषत । सुयवसिनीऽइति सु । यवसिनी । परिवापऽइति परि । वापः । चर्षणि सहामिति चर्षणि । सहाम् । चर्षणिधृतऽइति चर्षणि । धृतः । पुरितेति पुरि । तता । पुरितदिति पुरि । तत् । स्तोहकर्णाऽइति स्तोह । कर्णः । शुष्ठ-कर्णऽइति शुष्ठ । कर्णः । बभ्रुनिकाशाऽइति बभ्रु । निकाशाः । अनुकाशेनेत्यनु । काशेन, अभ्ययन्तऽइत्यभि । यन्तः । अयुनगित्ययु । नक् । सदन्यमिति स-दन्यम् । देवयुवमिति देव । युवम् । आकारोपधो यकारमिति सूत्र एतदध्यायस्याप्येतदध्यायस्थत्वात् । स्थिरोर्ध्वस्थिते दृष्टिमानिवेति दृष्टिमान् । इव ॥ स्व-रात्संयोगादिर्द्विरुच्यते सर्वत्र ॥ १३१ ॥ स्वरात्परः संयोगस्यादिवर्णः पदान्तमध्यादिषु द्विरुच्यते । अनु-ष्टुप्ते । इषे त्वा । आच्च्या जानु । स्वरादिति किम् । श्रुधि श्रुत्कर्ण ॥ परन्तु रेफहकाराभ्याम् ॥ १३२ ॥ तु एवार्थः । रेफहकाराभ्यां परं व्यञ्जनमेव द्विरुच्यते न रेफहकारौ । सूर्य्यः । पूर्व्वः । प्रबाह्वाय । बाह्वोः । रेफहकारयोः प्रत्यक्षश्रुतिनिमित्तत्वेन सामान्यप्राप्त-कार्यित्वबाधः । तेन रहभिन्नस्यैवानेन द्वित्वम् । अ-ति ह्रस्वम् । अर्हतः । अत्रैतयोर्न्न द्वित्वम् । स्वरे परे रेफात्परेषामूष्मणामनेन द्वित्वम् । तत्र रेफस्य ए-

कारसहितोच्चारणविधानाद्रेफधर्माभावात् । दर्शि-
तम् । वर्षा, यत्र तुल्यरत्वं तत्र विधानाभावाद्द्वित्वं
भवत्येव । वर्ह्णैः । वर्ष्याय । अत एव पाणिनिना "शरोऽ-
चीति" द्वित्वनिषेधः कृतः । परं रेफहकाराभ्यां व्यञ्जनं
तूष्मवर्जितम् । द्वित्वमापद्यते रेफहकारौ तु न कुत्र-
चित् ॥ १ ॥ ऊष्मान्तस्थाभ्यश्च स्पर्शः ॥ १३३ ॥ च ए-
वार्थो भिन्नक्रमः । ऊष्मभ्योऽन्तस्थाभ्यश्च परः स्पर्श एव
द्विरुच्यते न ऊष्मान्तस्थाः । अश्मन्नूर्ज्जम् । पूष्णः । ह-
स्ते । दधिक्राव्णः । शल्मलिः ॥ विसर्ज्जनीयाद्व्यञ्ज-
नपरः ॥ १३४ ॥ विसर्ज्जनीयात्परः स्पर्शो द्विरुच्यते व्य-
ञ्जनपरश्चेत् । विष्णोः क्रमः । हिरण्यपाणिः प्र-
ति गृभ्णातु । व्यञ्जनपरः किम् । न्यङ्कुः । गौरमृगः
पिद्वः ॥ ङ्णौ चेद्ध्रस्वपूर्वौ स्वरे पदान्तौ ॥ १३५ ॥ प-
दान्तस्थौ ङकारनकारौ स्वरे परे ह्रस्वपूर्वौ द्विरुच्ये-
ते ॥ युङ्ङसि । अघ्नन्नमीमदन्त । ह्रस्वपूर्वौ किम् । सु-
प्राङजः । कुटरूनालभते ॥ नास्वरपूर्वा ऊष्मान्तस्थाः ॥
१३६ ॥ अस्वरेति पर्युदासः । तेन स्वसदृशस्य वर्णस्य
ग्रहणम् । ये ऊष्माणोऽन्तस्थाश्च व्यञ्जनपूर्वास्ते द्विर्व-
चनस्य निमित्तं न भवन्ति । वर्ष्मन् । पार्ष्ण्या वा । व्य-
ञ्जनेति किम् । अप्वे ॥ यैस्तु परं तैर्न पूर्वम् ॥ १३७ ॥
यैर्हेतुभूतैः परस्य द्विर्भावः क्वचिदुक्तस्तैः सह संयुक्तौ

पूर्वं तद्व्यञ्जनं न द्विरुच्यते । कृत्स्नहृदयेन । सकारस्य ऊष्मत्वात्स्पर्शद्विर्भावस्य निमित्तत्वं तेन संयुक्तं पूर्वस्पर्शः तकारो न द्विरुच्यते । अत्र पूर्वस्थानेन निषेधः परस्य पूर्वेण । यत्र चोभयतः स्पर्शैः संयुक्ताः शषसाः सह ॥ तत्र नाद्यः क्रमो ज्ञेयो नापरो बोधितो बुधैः ॥ २ ॥ प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः ॥ १३८ ॥ द्वितीयाः प्रथमैश्चतुर्थास्तृतीयैः सह द्विरुच्यन्ते । परिभाषेयम् । यत्र द्वितीयानां चतुर्थानां च द्विर्भावः प्राप्तस्तत्रेदमुपतिष्ठते । विकख्याय । शीर्घ्याय । परमेष्ठी ॥ विष्णुरुक्ती ॥ अन्तःपदेऽपञ्चमाः पञ्चमेषु विच्छेदम् ॥ १३९ ॥ पदमध्ये विद्यमानाः पञ्चमभिन्नाः स्पर्शाः पञ्चमेषु यममापद्यन्ते । विच्छेद इति यमसंज्ञा । रुक्मः । अग्निः । वार्त्रघ्नम् । तनच्छ्नम । आर्त्नी । विद्मा ते । सिद्ध्मलम् । पाप्मने । अत्र "स्वरात्संयोगादिरिति" द्वित्वे जाते "विकारी यथासन्न" मिति प्रतिवर्गमाद्यानां जित्संज्ञकत्वात्प्रथमो यमः । द्वितीयानां जित्संज्ञकत्वात्सोष्मसंज्ञकत्वाच्च द्वितीयः । तृतीयानां धिसंज्ञकत्वात्तृतीयः । चतुर्थानां धिसंज्ञकत्वात्सोष्मसंज्ञकत्वाच्च चतुर्थः । एवं चत्वारः । अत एव चत्वारश्च यमाः स्मृता इति पाणिनीयशिक्षायामुक्तम् । एते ज्ञेयाः । न त्वेषामुच्चारणम् ॥ अशरीरं यमं

प्राङ्गुरिति शिक्षाग्रामुक्तत्वात्केवलं ज्ञानमात्रफलम् ।
नानुस्वारः ॥ १४० ॥ अनुस्वारो न द्विरुच्यते ।
इम ए स्तनम् ॥ सवर्णे ॥ १४१ ॥ सवर्णे परे
व्यञ्जनं द्विर्न्न भवति । संय्यौमि । यन्ते ॥ ऋट-
वर्गे ॥ ॥१४२ ॥ ऋटवर्गे परे न द्विरुक्तिर्भव-
ति ।, अनिष्टृतः । ऊष्मान्तस्थाभ्यइति प्राप्तम् । यमे ॥
१४३ ॥ यमे परे न द्वित्त्वम् । यकक्ना । अत्र अन्तः-
पद्इति ककारात्परे यमे जाते ककारस्य संय्योगा-
दित्वात्प्राप्तं द्वित्वन्न ॥ विसर्ज्जनीयः ॥ १४४ ॥ न द्वि-
रुच्यते । दिवः ककुत् । स्वरात्संयोगादिरिति प्राप्तम् ॥
स्ववर्गीये चानुत्तमे ॥ १४५ ॥ उत्तमभिन्ने स्ववर्गीये
वर्णे परे द्वित्वन्न । यत् ते । तत् देवानाम् । अनुत्तमे
किम् । तन्नः ॥ अवसितं च ॥ १४६ ॥ अवसानगतं
व्यञ्जनं न द्विरुच्यते । ऊक् । 'परन्तु रेफहकाराभ्या'-
मिति 'ऊष्मान्तस्थाभ्यश्चेति' वा ककारस्य द्वित्वप्राप्तिः ॥
द्वियकारम् ॥ १४७ ॥ इत्यधिकारः ॥ आप्याय्यमानो
यमो रय्यै धाय्या रूपं यवाय्यं नपाय्यं पौरुषेय्या हृदय्याय
सह रय्या निचाय्य मन्याय्येति च ॥ ॥ १४८ ॥
इमानि दशरूपाणि द्वियकाराणि निपात्यन्ते, चका-
रोऽनुक्तसमुच्चयार्थः । तेन रय्या पोषेण । आप्याय्य-
मानो यमः । यम इति किम् । आप्यायमानो ऽअ-

स्तनाय सोम, रथ्यै त्वा । यज्ञेति धाय्या रूपम् । त-न्नो गीर्भिः श्रवाय्यम् । वर्त्तीं रुद्रा नृपाय्यम् । पौ-रुषेय्या गृभः । नमो हृदय्याय च । सह रथ्या निवर्त्त-स्व । अग्ने ज्योतिर्न्निचाय्य । शरसि सन्नाय्यमा-ने ॥ द्विसकारठं० शास्त्सरास्स्वेति ॥ १४९ ॥ इमे द्वे द्विसकारे 'स्वरात्सँय्योगादिरिति' द्वित्वे प्राप्ते द्विसकार-त्वविधानं ज्ञापकम् । सामान्यतः अन्तस्थासु सकारस्य द्वित्वन्न । उक्तं च शिक्षायाम् । सकारस्य द्विरुक्तिर्या सा द्वयोरेव नान्यतः ॥ आ च शास्त्वा च रास्स्वेति स-कारोऽत्र द्विरुक्तिजः । १ । अत एव केशवेनापि "न सो व्योम्नेति सूत्रमकारि ॥ न क्ष्टचिन्त्विसतयेभ्यस्त्रैकम् ॥ १५० ॥ क्षादिभ्यः सप्तभ्यस्त्र इत्यत्र एकमेव व्यञ्जनं न द्वे ॥ क्षत्रस्य योनिः । इष्टत्र्यधेत् । चित्रन्देवानाम् । न्वित्रऽआदित्यानाम् । सत्रस्यऽऋद्धिः । लोके तत्र । स-त्रन्त यत्र पूर्व्वे ॥ वीड्वाय वाट्ध्रीनसोद्रान्स्रास्नेत् ॥ १५१ ॥ एतेषां त्रयाणां द्वित्वं न प्राणिवाचकास्नेत् । नमो वीड्वाय च । वाट्ध्रीनसस्ते मत्यै । अपा रुद्रो मा-साम् । चराः किम् । समुद्राय शिशुमारान् । एतत्प्र-करणं ज्ञानार्थं क्वचिदुच्चारणार्थम् । न व्यञ्जनपरस्यैक-स्यानेकस्य वोच्चारणे विशेषोऽस्तीति श्रीभाष्योक्तेः ॥ स्वरोऽक्षरम् । सहाद्यैर्व्यञ्जनैरुत्तरैश्चावसितैरित्युक्तम् ।

तत्र स्वरयोर्मध्ये यत्रानेकं व्यञ्जनं तत्र किं पूर्वस्याङ्गं किं परस्येति निर्णयार्थमाह ॥ सँय्योगादिः पूर्वस्य ॥ १५२ ॥ सँय्योगस्यादिवर्णः पूर्वस्याङ्गम्भवति । इषेत्त्वा । अत्र द्वित्वे द्वौ तकारौ । तत्र प्रथमस्तकारः पूर्वस्य द्वितीयस्तकारो वकारश्च परस्य ॥ यमश्च ॥ १५३ यमश्च पूर्वस्याङ्गम् । रुक्मः । अत्र ककारो यमश्च पूर्वस्याङ्गं मकार उत्तरस्य ॥ क्रमजं च ॥ १५४ ॥ सँय्योगादेः परस्य द्वित्वेन जातं व्यञ्जनं क्रमजं तच्च पूर्वस्याङ्गम् । पार्श्व्यम् । रेफः एकः शकारः पूर्वस्य द्वितीयशकारवकारयकारा उत्तरस्य । वर्ष्ट्याय । रेफः एकः षकारः पूर्वस्य द्वितीयषकारयकारौ परस्य । बाह्वोः । हकार एको वकारः पूर्वस्य । द्वितीयो वकार उत्तरस्य । तस्माच्चोत्तरꣳ स्पर्शे ॥ १५५ ॥ क्रमजादुत्तरं व्यंजनं स्पर्शे परे पूर्वाङ्गं भवति । पार्ष्ण्यो वा । रेफो द्वौ षकारौ पूर्वस्य णकारयकारौ परस्य । वर्ष्मन् । रेफो द्वौ षकारौ पूर्वाङ्गं मकारः पराङ्गम् । यदर्थं पूर्वाङ्गपराङ्गत्वविचारस्तदाह ॥ व्यञ्जनꣳ स्वरेण सस्वरम् ॥ १५६ ॥ यद्व्यञ्जनं यस्योदात्तादेः स्वरस्याङ्गं तत्तत्स्वरयुक्तं स्यात् । उक्तान्युदाहरणानि । उक्तं च, स्वर उच्चः स्वरो नीचः स्वरः स्वरितएव च ॥ स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरम् ॥ सँय्योगपूर्वा व्यञ्जनान्ता अवसानगताः स्वरा द्विमा-

त्ता: ॥ १५७॥ द्विमात्रा इति ह्रस्वापेक्षया किञ्चित्का-
लाधिक्यस्योपलक्षणं न तु दीर्घत्वस्य । उक्तं च शिक्षा-
याम् । स्वरा: सँय्योगपूर्व्वा ये व्यञ्जनान्तास्तथान्तगा: ।
एषां कालो द्विमात्र: स्यान्न तु दीर्घा हि ते स्मृता: । १ ।
अग्नि: । तत् । जात: । तन् । उत । च । इति सामान्य-
विकारा: ॥ स्वरितवर्ज्जमेकोदात्तं पदम् ॥ १५८ ॥ स्व-
रितमक्षरं अस्ति यस्मिंस्तत्स्वरितवत्पदं वर्जयित्वा ए-
कोदात्तं पदं स्यात् । एक: स्वर: पदे उदात्त: स्वरितो
वा भवति । उत्सर्गोऽयम् । द्युदात्तानि तु वाचकानि
वक्ष्यति । अवशिष्टं तु ॥ अनुदात्तम् ॥ १५९ ॥ अनुदा-
त्तोऽस्त्यस्मिंस्तदनुदात्तं स्वरविशिष्टं स्यात् । सादन्यम् ।
व्वीर्य्यम् । अनमीवा: । अनुदात्तमित्यधिकार: ॥ नो नौ
मे मदर्थे त्रिह्यकेषु ॥ १६० ॥ न: नौ मे एतानि पदानि
अनुदात्तानि स्यु: । आन: । तन्नौ । यन्मे । त्रिह्यकेष्वि-
ति स्पष्टार्थम् । मदर्थ इत्युत्तरार्थम् । संदेहे साहचर्य्यं
नियामकमिति सर्वादेशस्यैव ग्रहणं तेन मे इत्यादेश-
विशिष्टस्य न । रायो मे ॥ मा च ॥ १६१ ॥ मा इ-
त्येतत्पदं अस्मदर्थे विद्यमानं अनुदात्तं स्यात् । प्रमा-
तिर । मदर्थे किम् । मा नो मित्र: ॥ वो वान्ते त्वदर्थे ॥
१६२ ॥ व: । वाम् । ते । इमानि पदानि युष्मदर्थे वर्तमा-
नानि अनुदात्तानि स्यु: । देवो व: । सँव्वाम् । मा ते ।

त्वदर्थे किम्। ते नोऽअर्व्वन्त॥ ॥ त्वा च ॥ १६२ ॥ इद-
मनुदात्तं स्यात्। भूताय त्वा। गन्धर्व्वस्त्वा ॥ पूर्व्ववाननु-
देशः ॥ १६३ ॥ पूर्व्वोक्तार्थवाचकं यत्पश्चादुच्चारितं प-
दमनुदात्तं स्यात्। घासमस्मै। एषाङ्कृणुहि। आ-
स्मिन्। पूर्व्ववानिति किम्। अस्मै जनाय। एषाम्प-
शूनाम्। अस्मिन्त्सधस्थे॥ असि ॥ १६४ ॥ इदमनु-
दात्तं स्यात्। वेदोऽसि। कृष्णोऽसि॥ यथा गृभो भु-
वोऽग्निभ्यः ॥ १६५ ॥ गृभ इत्यादिभ्यो यथेति
पदमनुदात्तं स्यात्। जीवगृभो यथा। अग्निभुवो य-
था। अग्नयो यथा। एभ्यः किम्। करद्यथा॥ गि-
र्व्वणाः॥ १६६॥ इदमनुदात्तं स्यात्। परि त्वा गिर्व्वणः॥
अग्ने घृतेनेति च ॥ १६७ ॥ अग्ने इत्येतत्पूर्वं घृतेने-
त्येतत्पदमनुदात्तम्। अग्ने घृतेन। अग्ने किम्। अ-
ङ्गिरो घृतेन॥ प्रचिकितश्च ॥ १६८ ॥ प्रेत्येतत्पूर्वकं
चिकित इत्येतत्पदमनुदात्तम्। प्रचिकितो मनीषा।
एनोऽपापे ॥ १६९ ॥ एन इत्येतत्पदमनुदात्तं पापेऽवि-
द्यमानं चेत्। उदेनम्॥ मैनाम्। अप्स्वेनत्। अवि-
शेषात्सर्वलिङ्गं गृह्यते। अपापे किम्। एनस्कृतम ॥
इह पूर्व्वं श्रुतम् ॥ १७० ॥ इहेत्येतत्पूर्व्वं श्रुतमित्येत-
दनुदात्तम्। ममेदिह श्रुतम्। तस्याख्यातत्वादनुदा-
त्तमाख्यातमित्यनेनानुदात्तत्वे सिद्धे विधानं ज्ञापक-

म् । अथातो व्याख्यातस्य तेन नानुदात्तत्वम् । तेन वरुण अधीहवमित्यस्य न निघातः । इह किम् । युवाना श्रुतम् ॥ मन्ये पदपूर्वं० सर्वत्र ॥ १७१ ॥ पद पूर्व्वम्मन्ये इत्येतदनुदात्तम् । होतारम्मन्ये । सर्वत्रेति यद्वृत्तोपपदाच्चेति निषेधबाधनार्थम् । तमन्ये यः ॥ वा च कमुचितत्समस्मात्त्वहस्मत्वईमथ्यौ अरे स्विन्निपा-पाताश्चेत् ॥ १७२ ॥ वा इत्यादयस्त्रयोदशशब्दा अनुदात्ता निपाताश्चेत् । वातो वा ॥ अग्निश्च । इमा नु कम् । यऽउ समस्मात् । हृदया विधश्चित् । अघायतः समस्मात् । आघा ये । दधे ह गर्भम् । हि ष्मातें । पीयति त्वोऽअनुत्वः । काऽईं सरे । आविर्मर्य्याः । अजारे पिशङ्गिला । कः स्वित् । निपाताः किम् । चिदसि । द्रविणमष्टु यज्ञम् । अन्ये निपाता आद्युदात्ता इति । अथो निपाता आद्युदात्ता इत्युक्तत्वात् ॥ पदपूर्व्वमामन्त्रितमनानार्थे पादादौ ॥ १७३ ॥ पादादौ अविद्यमानं पदपूर्वं सम्बोधनविभक्त्यन्तमनुदात्तं स्यात् तत्पदमामन्त्रितं च परस्थानन्वितं । अरातिमग्ने । रोदसी विष्णो । नियुद्भिर्व्वायो । तव पूषः । पदपूर्व्वं किम् । अग्ने व्रतपते । वायोऽअस्मिन् । पूषन्तव । अनानार्थे किम् । अग्निश्च हि देवाः । अपादादौ किम् । इषन्नग्ने ॥ तेनानन्तरा षष्ठ्येकपदव-

त् ॥ १७४ ॥ आमन्त्रितेन अर्यतो देवतञ्च सम्बद्धं प-
ष्ठ्यन्तमेकपदवत्स्यात् । विश्वासां भुवां पते । उत्ति-
ष्ठ ब्रह्मणस्पते । देवशः पूर्वं परञ्च । अत एव "न
पृथिवीत्यादिनिषेधः कृतः । अनन्तरं किम् । पती त्वमस्य ।
यस्यौषधीः प्रसर्पथ । अत्र यस्येति अङ्गमङ्गमित्यनेन
सम्बध्यते ॥ न पृथिवि देवयजन्योषध्या देव भूतेः प-
वित्रपते पवित्रपूतस्यापान्नपान्नृणान्नृपते सोमाग्नेः
सोमेन्द्रस्य सोम सुवीर्यस्य सोम विश्वेषान्देवानां प्र-
जापते यस्य यस्य देवाग्ने तवाग्ने वाजस्याग्ने वरु-
णस्यापेऽग्रस्याकम् ॥ १७५ ॥ एतानि पञ्चदश प-
ष्ठ्यन्तानि नैकपदवत्स्युः । प्रतिरचानिति किम् । अ-
पान्नपाच्चो वः ॥ शुनङ्कल सखाराजन्विकिरिद्र विलो-
हित दरिद्र नीललोहित अयस्कार भूयस्कारात्वेऽअ-
म्बिके बालिके गारव्ये महश्व हिंसिते मरुतोऽअश्वि-
ना यज्ञ्येगव्ये द्यावापृथिवीऽउरो अग्ना ३ इपत्नीवँ-
स्साग्नो३ नृ प्राचीऽन्नीदुष्टम शिवतम सहस्राद्ग्र शतेषुधे
वसुपते वसुदावन् ॥ १७६ ॥ एतान्येकोनत्रिंशदा-
मन्त्रितानि नानुदात्तानि । अत यानि अपूर्वाणि पा-
दादीनि वा तेषामनुदात्तत्वाभावः सिद्ध एव । अन्ये-
षामनेन निषेधः ॥ द्व्योत्तराणि नव स्वानोत्तराणि
षडग्न्युत्तराणि चत्वारि भगोत्तराणि चेन्द्रोत्तरमेक-

ठं॰ सिनीवाल्युत्तरं च प्रजापतये ब्रह्मन्निति च ॥ १७७ ॥ इडशब्दादुत्तराणि नव । स्वानशब्दादुत्तराणि षट् । अग्निशब्दादुत्तराणि चत्वारि । भगशब्दादुत्तराणि चत्वारि । इन्द्रशब्दादुत्तरमेकं । सिनीवालिशब्दादुत्तरमेकं, प्रजापतये शब्दादुत्तरे ब्रह्मन्निति । एतानि षड्विंशतिरामन्त्रितानि नानुदात्तानि स्युः । इडे । रन्ति । हव्ये । काम्ये । चन्द्रे । ज्योते । अदिति । सरस्वति । महि । विश्रुति । स्वान । भ्राज । अङ्घारे । बम्भारे । हस्त । सुहस्त । कृशानो । अग्ने । इन्द्र । वरुण । मित्र । देवाः । भग । प्रणेतः । भग । सत्यराधः । । भग । इन्द्र । गोमन् । सिनीवालि । पृथुष्टुके । प्रजापतये । ब्रह्मन् ॥ भूतिराद्युदात्तम् ॥ १७८ ॥ अथाद्युदात्ताधिकारः । भूतिरित्येतदाद्युदात्तं स्यात् । भूतिश्च मे । नमो भूत्यै येदम् ॥ कदा नरिष्येम पूर्वम् ॥ १७९ ॥ नरिष्येमेत्येतत्पूर्वं कदा आद्युदात्तं स्यात् । नरिष्येम कदाचन । नरिष्येम किम् । कदाचन स्तरीः ॥ आमन्त्रितं च ॥ १८० ॥ सम्बोधनविभक्त्यन्तमाद्युदात्तम् । अग्ने गृहपते ॥ "तेनानन्तरेत्येकपदातिदेशात् ऊर्ज्जो नपादित्यत्र ऊर्ज्जः शब्द आद्युदात्तः । वस्तुत ऊर्ज्जः शब्दस्तु अन्तोदात्तः । ऊर्ज्जो नपातम् । "पदपूर्वमिति तु एतस्यापवादः । तस्याप्रा-

त्तिर्निषेधविषयस्यात्रोदाहरणम् ॥ कृष्णो ऽङ्गसंयोगे । १८१ । कृष्णशब्द आद्युदात्तः स्यात् । पशुवाचकस्य विशेषणं न चेत् । कृष्णो ऽसि । कृष्णो राज्यै । अङ्गेति किम् । श्वा कृष्णः । अत्र श्वेत्यस्य कृष्णइति विशेषणम् ॥ व्ययवाँश्चान्तः । १८२ । विकारवानन्तःशब्द आद्युदात्तः स्यात् । परो ऽन्तः । व्ययवानिति किम् । अन्तर्मीढ इति । अयमव्ययम् अतो वचनादिकृतो विकारो न ॥ परः प्रधाने ॥ १८३ ॥ अयमाद्युदात्तः प्रधानवाचकश्चेत् । जातः परो ऽग्न्यः । प्रधाने किम् । परो दिवा । अत्र परशब्दो ऽन्यवचनः ॥ मात्रा च परिमाणे ॥ १८४ ॥ मात्राशब्द आद्युदात्तः परिमाणवाचकश्चेत् । कस्य मात्रा । परिमाणे किम् । विभूमात्रा । इदं मातृशब्दस्य तृतीयैकवचनम् ॥ दक्षिणा च ॥ १८५ ॥ अयमाद्युदात्तः । दक्षिणामारोह ॥ न दृशविश्वकर्म्मनिषद्येन्द्रस्य पातु सदः सहस्र्येषु ॥ १८६ ॥ दृशेत्यादिसप्तसु दक्षिणाशब्द आद्युदात्तो न । निषद्यादिषु त्रिषु अव्यवहितस्यासम्भवे ऽपि निषेधो भवत्येव । तस्मान्निति वर्णसप्तमीनिर्द्दिष्टविषयं "पदे चेति ज्ञापकात् । दक्षिणा दृश । दक्षिणा विश्वकर्म्मा । दक्षिणतो निषद्य । दक्षिणत ऽइन्द्रस्य । दक्षिणतः पातु ॥ तसिलादि"ष्विति पुंवद्भावः । अत्र दीर्घान्तत्वाभावात्पूर्वसूत्रस्याप्राप्तौ निषेधो ज्ञा-

पकः । यत्किञ्चिदवयवभेदेऽपि कार्यं प्रवर्तत एवे-ति । अतएव "एनोऽपापि" इति अप्लेनदित्यत्र भव-त्येव । दक्षिणासद्ः । दक्षिणासद्भ्यः ॥ कर्णः स्वाङ्गे ॥ १८७ ॥ कर्णशब्द आद्युदात्तः स्वाङ्गवाचकश्चेत् । क-र्णौ ते दनी । स्वाङ्गे किम् । कर्णो गर्दभः ॥ मह्नो नपुंसके ॥ १८८ ॥ मह इत्येतदाद्युदात्तं नपुंस-कलिङ्गं चेत् । महस्त्य । महश्च मे । नपुंसके किम् । महोऽग्निः । अयं पुंल्लिङ्गः । श्ववस्य ॥ १८९ ॥ अयं चाद्युदात्तो नपुंसकश्चेत् । तव श्रवः । नपुंसके कि-म् । श्रवश्च मे । अयं पुंसि ॥ अन्धो वीर्ये ॥ १९० ॥ अन्धशब्द आद्युदात्तो वीर्यवाचकश्चेत् । इन्धस्त्य । वी-र्ये किम् । अन्धन्तमः । अत्रान्धशब्दो निविडार्थः ॥ ए-ता वर्णे ॥ १९१ ॥ अयमाद्युदात्तो वर्णवाचकश्चेत् । एताऽऐन्द्राग्नाः । एताश्चिश्रमाः । वर्णे किम् । एता मे ॥ रोहितस्य केवलः ॥ १९२ ॥ केवलरोहितशब्द आद्युदात्तः । रोहितो धूम्ररोहितः । केवलः किम् । धूम्ररोहितः ॥ यन्वी राट् ॥ १९३ ॥ यन्वीशब्द आद्यु-दात्तो राट्शब्दपरश्चेत् । यन्वी राट् । राट् किम् । यन्व्यसि ॥ ओषधीरनामन्त्रिते ॥ १९४ ॥ अनामन्त्रि-तओषधीशब्द आद्युदात्तः । याऽओषधीः । अनाम-

स्वाहा वाजः पशो नमः ॥ १९५ ॥ सर्वोदृष्टशब्दा आद्युदात्ताः । सर्व्वं ध्यत् । यत्र विश्वम् । यथ मानुषः । विश्वा ऽआशाः । स्वाहा यज्ञम् । वाजश्च मे । पयः पृथिव्याम् । नमः पशवे ॥ असि शिवासुपदा पयस्वतीयत्ते मधुमतीर्व्वर्च्चस्वानोजिष्ठभ्राजिष्ठशुष्मिणी भद्रूवाच्याय वत्यो मेध्यो यत्र आदित्यस्त्रितः सोमेन स्वसेत्येतेषु ॥ १९६ ॥ शिवादिषु सप्तदशसु असिशब्द आद्युदात्तः स्यात् । असि शिवा । असि यत्ते । भागोऽसि । मधुमतीर्न्नः । असि वर्च्चस्वानहम् । असोजिष्ठोऽहम् । असि भ्राजिष्ठोऽहम् । असि शुष्मिणी । असि भद्रूवाच्याय । असि वन्यश्च । असि मेध्यश्च । असि यमः । असत्यादित्यः । असि त्रितः । असि सोमेन । असि स्वसा अत्र "सन्निकृष्टविप्रकृष्टयोरि"त्यनेन व्यवहितस्य असि स्योनेत्यसिशब्दस्य सुपदाशब्दपरत्वेऽपि आद्युदात्तत्वं । न पयस्वती सहचरितत्वात्सुपदा चासिति सुपदा शब्दस्य आद्युदात्तत्वनिमित्तत्वं । तेनासहचरितस्य स्योनासि सुषदासि ॥ धनदारत्नधाभ्यां च ॥ १९७ ॥ आभ्यां च परोऽसि शब्दआद्युदात्तः । धनदाऽअसि । रत्नधाऽअसि ॥ रायोऽपोषे ॥ १९८ ॥ रायइत्येतत्पदमाद्युदात्तं स्यात्पोषशब्दः परो न चेत् । रायो मे ।

तोतो रायः । अपोषे किम् । रायस्पोषम् ॥ न भागमीशिषयोः ॥ १९९ ॥ एतयोः परयो रायइत्येतदाद्युदात्तन्न । रायो भागम् । रायऽईशिषे ॥ त्रिधा बद्धहितयोः ॥ २०० ॥ एतयोस्त्रिधाशब्द आद्युदात्तः । त्रिधा बद्धः । त्रिधा हितम् ॥ सुकृतं भूते ॥ २०१ ॥ सुकृतपदमाद्युदात्तं भूतकालवाचकं चेत् । पृथुः सुकृतः । भूते किम् । सुकृतं च मे । अयं पुण्यवाचकः ॥ द्विरुदात्तानि ॥ २०२ ॥ अधिकारोऽयम् ॥ बृहस्पतिर्वनस्पतिर्नराशंसस्तनूनप्त्रे तनूनपान्नक्तोषासोषासानक्ता द्यावापृथिवी द्यावाक्षामा क्रतूदक्षाभ्यामेतवाऽअन्वेतवा इति च ॥ २०३ ॥ चकारादुत्तरसूत्रादनामन्त्रितानीत्यपकृष्यते । अनामन्त्रितानि बृहस्पतिरित्यादिद्वादशपदानि द्विरुदात्तानि भवन्ति । अनामन्त्रितानि किम् । तनूनपात्पथः । बृहस्पतेऽअति । वनस्पते वीड्वङ्गः । द्यावापृथिवीऽउरो ॥ देवताद्वन्द्वानि चामन्त्रितानि ॥ २०४ ॥ आमन्त्रितानि वर्जयित्वा देवताद्वन्द्ववाचकानि पदानि द्विरुदात्तानि । अग्नीषोमौ । मित्रावरुणौ । देवतेति किम् । दीक्षातपसोः । अनामन्त्रितानि किम् । धेनुर्मित्रावरुणा ॥ इन्द्राबृहस्पतीभ्यामिन्द्राबृहस्पती इति त्रीणि ॥ २०५ ॥ अनयोः शब्दयोस्त्रीण्यक्षराण्युदा-

त्तानि स्युः । इन्द्राबृहस्पतिभ्यान्त्वा देवाव्यम् । इ-न्द्राबृहस्पती॒ऽऊत्ये॒ऽऽर्ध्याम् ॥ सर्व्वमग्ना ३ इ लाजी-ऽऽशाचीनिति त्रिमात्राणि च ॥ २०३ ॥ अग्ना इत्या-दिपदत्रयं सर्व्वमुदात्तं स्यात् । त्रिमात्रोऽस्ति येषु तानि त्रिमात्राणि त्रिमात्रस्वरविशिष्टानि निपात्यन्ते । अग्ना३इ । लाजी३न् । शाची३न् ॥ प्रणवश्च ॥ २०४ ॥ अयंच सर्वोदात्तस्त्रिमात्रश्च स्यात् । मादयन्तामो ३ म्प्रतिष्ठ । ओं३क्रतो ॥ विवेशा३इति चानुदात्त-म् ॥ २०५ ॥ उत्तरमपूर्वं इत्युत्तरसूत्राभ्यामपकृष्यते । अवसाने विद्यमानमनुदात्तं विवेशा३इति पूर्वं त्रिमा-त्रस्वरविशिष्टं निपात्यते । विश्वम्भुवनमाविवेशा३ । उत्तरं किम् । आविवेश काव्यन्तः । अनुदात्तं कि-म् । येषु विश्वम्भुवनमाविवेश । हिरण्यगर्भ इत्य-ध्याये विवेशपदस्य चतुर्वारमेकस्मिन्दर्भे पठितत्वादपू-र्वत्वस्य सापेक्षत्वात्तदध्यायस्यस्यैव प्लुतत्वम् । तेनान्य-त्र अत्तरा॑२ ॥ ऽआविवेश । अभिसँविवेशेत्यादौ न ॥ आसीदितिचोत्तरँविचारे ॥ २०६ ॥ विचारे वर्त्त-मानमवसानस्थं आसीदितिपदमनुदात्तविशिष्टं नि-पात्यते । उपरि स्विदासीत् । विचारे किम् । स्वि-त्क्याऽसीत् ॥ पूर्व्वमन्तोदात्तम् ॥ २०७ ॥ विचारे वर्त्तमानं पूर्वमन्त्रमध्यस्थमासीदितिपदमन्तोदात्तं स्या-

त् । त्रिमात्रं च निपात्यते । अथ: स्विदासी३त् । विचारे किम् । का स्विदासीत् । अन्तोदात्तमित्यधिकार: ॥ द्वन्द्वश्चेन्द्रसोमपूर्वं पूषाग्निवायुषु ॥ २०८ ॥ पूषादिषु त्रिषु उत्तरपदभूतेषु इन्द्रसोमपूर्वपदकं द्वन्द्वमन्तोदात्तं स्यात् । इन्द्रापूष्णो: । इन्द्राग्नी तमप । इन्द्रवायुभ्याम् । सोमापौष्णा: ॥ अग्निश्चेन्द्रे ॥ २०९ ॥ इन्द्रशब्दे उत्तरपदे सति अग्निपूर्वो द्वन्द्वोऽन्तोदात्त: स्यात् । ऋक्‌साम्यो: शिल्पे ॥ यतौ गतौ ॥ २१० ॥ यतइत्येतत्पदमन्तोदात्तं स्याद्गत्यर्थकं चेत् । स्वर्यतो धिया । गतौ किम् । यतो जात: प्रजापति: ॥ पायोर्व्विश: ॥ २११ ॥ पायुशब्दाद्विश इत्ययमन्तोदात्त: । पायुर्व्विश: ॥ पायो: किम् । दैवीर्व्विश: ॥ आयुरर्य्यमोर्व्वशश्यस्तिभ्य: ॥ २१२ ॥ अर्य्यमादिभ्यस्त्रिभ्य: पर आयु:शब्दोऽन्तोदात्त: । अर्य्यमायु: । उर्व्वशश्यायु: । विधानसामर्थ्याद्व्यवधानेऽपि । कृष्णमस्ति । आयोद्वा । एभ्य: किम् । आयुर्म्मे ॥ अस्य रोचनासौ बोधा मे पारस्पुरऽएतारो दिव: कोऽहन्त्वमहीँ व्याऽईशाऽईशानेभ्य: ॥ २१३ ॥ रोचनादिद्वादशभ्य: परोऽस्य शब्दोन्तोदात्त: । रोचनाऽस्य । असावस्य पिता । बोधा मेऽअस्य । तमसस्पारमस्य । पुरऽएतारोऽअस्य । दिवोऽअस्य पृष्ठम् । कोऽअस्य ।

व्ये शाहमस्य । त्वमस्य यन्ता । महीमस्य स्तोत्रे, यऽईशे-ऽस्य । ईशानमस्य ॥ प्रत्नाँ यज्ञस्य हविषः पाहीत्यातं मद्ध्वो यजमानस्य होतुरजरासो लोकेषु च ॥ २१४ ॥ प्रत्नामित्यादेकादशसु अस्येत्यन्तोदात्तं स्यात् । अस्य प्रत्नाम् । अस्य यज्ञस्येदृचः । अस्य हविषस्तना । सुमनाऽअस्य पाहि । अस्येदिन्द्रो वाट्टधे । अस्य यन्ता । अस्य मद्ध्वः पिबत । अस्य यजमानस्य । अस्य होतुः प्रदिशि । अस्याजरासः । अस्य लोकः सुतावतः । अनुदात्तमन्यत् ॥ २१५ ॥ उक्तान्यं यदस्येतिपदमनुदात्तम् । कण्वस्य विष्ठाः । षड-स्य विष्ठाः ॥ अनुदात्तमाख्यातमामन्त्रितवत् ॥ २१६ ॥ तिङन्तमामन्त्रितवत्पदं पूर्वमपादादौ विद्यमानं परस्परान्वितार्थकं चेदनुदात्तम् । पशून्पाहि । हव्य-ठ॰ रक्ष । पदपूर्वं किम् ।ऽयन्तु वयः । व्विदेदग्निः । अपादादौ किम् । अरातीः सहस्व । परस्परान्वितार्थकं किम् । व्विष्णो पाहि । पाहि यज्ञम् ॥ परोपावप्रतिपर्य्यन्वप्यत्याध्याङ्प्रसन्निर्दुरुन्निविस्वभि ॥ २१७ ॥ परा । उप । अव । प्रति । परि । अनु । अपि । अति । अधि । आङ् । प्र । सम् । निर् । दुर् । उत् । नि । वि । सु । अभि । एते विंशतिरुपसर्गाः । तथा चोक्तम् । विंशतेरुपसर्गाणामुक्ता एकाक्षरा नव । आ-

द्युदात्ता दश्चैतेषामन्तोदात्तमभिस्वयम् । १ । उपसर्ग उपसर्गे ॥ २१८ ॥ उपसर्ग उपसर्गे परेऽनुदात्तः । समग्रच्यवद्ध्वम् । सम्प्रयात ॥ आम्रेडिते चोत्तरः ॥ २१९ ॥ द्विरुच्चारणे पर उपसर्गोऽनुदात्तः । प्रप्र यज्ञपतिम् । सꣳसमित् ॥ कृदाख्यातयोश्चोदात्तयोः ॥ २२० ॥ उदात्तोऽभि-ययोरुदात्तवति कृदन्ते उदात्तवत्याख्याते परे उपसर्गोऽनुदात्तः । विभ्राजमानः । सम्भरन्ति । उदात्तयोः किम् । उपुरुप्रसि । अवधूतम् ॥ नाभ्येकाक्षरस्य स्वरसन्धयेऽकृति ॥ २२१ ॥ अभिरेकाक्षरश्चोपसर्गः स्वरात्मके उपसर्गेण सन्धिमति कृदन्तभिन्ने परेऽनुदात्तो न स्यात् । अभ्याऽऽदधामि । अभ्यषिञ्चन् । व्याकरोत् । न्यसीदत्पिता नः । व्यदधुः । अकृति किम् । एत्याऽऽद्रूषः ॥ आपूतजातयोः ॥ २२२ ॥ आ इत्ययमुपसर्गः पूतजातयोः परयोरनुदात्तो न स्यात् । आपूतः । आजातः ॥ अधि नि प्र प्रति श्रिताञ्चिर्णां प्रभानवः पचतेषु ॥ २२३ ॥ अधीत्यादयश्चत्वारो यथासङ्ख्यं श्रितादिषु चतुर्षु नानुदात्ताः । अधिश्रिताः । विश्वन्यञ्चिणाम् । प्रभानवः सिस्रते । प्रतिपचता गृभीषत ॥ उज्जेषमावर्त्तेऽआपनीफणत्सꣳसनिष्यदत्सँव्वतं प्रयाणꣳसञ्चरन्तꣳसꣳरभद्ध्वं प्रसितिँ विक्रमस्व-

त्येष्वनु ॥ २२४ ॥ उज्जेषमित्यादिदशसु अनुरनुदात्तो न । अनूज्जेषम् । अन्वावर्त्ते । अन्वापनीफणत् । अनुमर्ठ०सनिष्ष्यदत् । अनुसँव्वतम् ॥ अनुप्रयाणम् । अनुसञ्चरन्तम् । अनुसर्ठ०रभद्धम् । अनुप्रसितिम् । अनुविकक्रशस्व ॥ आपपोदात्ते ॥ २२५ ॥ आ । उप । एतौ उदात्ते प्रशब्दे नानुदात्तौ भवतः । आप्रयच्छ । उपप्रागात् ॥ अभि प्रेह्युपसम्प्रयातप्रसर्पन्प्वासुषाव ॥ २२६ ॥ अभिप्रेहीत्यादि चत्वारि निपात्यन्ते । प्रकृत्याऽऽख्यातमाख्यातपूर्व्वम् ॥ २२७ ॥ नानुदात्तम् । पिबन्तु मदन्तु व्यन्तु ॥ उदात्तोऽस्ति यस्मिन्नुदात्तवतः आमन्त्रितात्परमाख्यातन्नानुदात्तम् । अग्ने पवस्व । होतर्य्यज । एकान्तरादपि ॥ २२८ ॥ एकवर्णान्तरितादपि उदात्तवतआमन्त्रितात्परमाख्यातन्नानुदात्तम् । ब्रह्मान्नप्रश्नवक्ष्यामि । अपिशब्दात्क्वचिदनुदात्तम् । इन्द्रायाहि । एतन्निर्णये सम्प्रदायएव शरणम् ॥ यद्वृत्तोपपदाच्च ॥ २२९ ॥ च अप्यर्थे । यदा यच्छब्देन वृत्तं सम्पादितं यत् यदि यतः यत्र यथा ये इत्यादि सर्वविभक्त्यंतं यद्वृत्तं तदुपपदं अर्थतः सम्बद्धं येन पदेन तस्मात्परमाख्यातन्नानुदात्तम् । अपिना यद्वृत्ता-

ऽग्नेरोचथाः । यथा समुद्रद्रऽएजति । यऽउपरासऽ-
ईयुः । दूरस्थस्यापि अर्थतः सम्बन्धो ग्राह्यः । तथा चो-
क्तम् । यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य तत् ॥
अर्थतो ह्यसमानानामानन्तर्य्यमकारणम् ॥ १ ॥
हेश्च ॥ २३० ॥ हिशब्दादुत्तरमाख्यातन्नानुदात्त-
म् ॥ आपो हिष्ठ ॥ उत्तरेऽपि ॥ २३१ ॥ हिशब्दे
परे चाख्यातन्नानुदात्तम् । वामुशन्ति हि ॥ ने-
त् ॥ २३२ ॥ अस्मान्निपातसमुदायात्परमाख्यातं
नानुदात्तम् ॥ नेत्त्वदपचेतयातै ॥ समनसस्कर-
त् ॥ २३३ ॥ समनसइत्यस्मात्परं करदित्याख्यातं
नानुदात्तम् । असपत्नाः समनसस्करत् ॥ द्वयोः
पूर्व्वं समुच्चये ॥ २३४ ॥ द्वयोराख्यातयोः समुच्चये
वर्त्तमानयोः पूर्वन्नानुदात्तम् । शम्मि च रत्यो व्वर्म्मि च
रत्यः । शञ्च व्वद्य परि च व्वद्य । समुच्चये किम् । तन्न-
मिद्गतं व्वरुणेन तन्तमिद्गतम् ॥ इति प्रकृतिस्वराः ॥ अर्थः
पदम् ॥ २३५ ॥ अर्थोऽस्ति यस्मिन्नर्थवाचकः । अक्षर-
समुदायो''ऽक्षरं वा पदं स्यात् । एषः । सः । तत् ।
उत । त्वा । आ । अवतु ॥ तच्चतुर्द्धा ॥ २३६ ॥ त-
त्पदं चतुः प्रकारं स्यात् । उक्तं च । क्रियावाचकमाख्यात-
मुपसर्गो विशेषकृत् ॥ सत्त्वाभिधायकन्नाम निपाताः
पादपूरणाः ॥ २३७ ॥ अपंयतु । पाहि । इत्याद्याख्यात-

म् । परा । उप । इत्यादयो विंशतिरुपसर्गाः । देवः । सविता । इत्यादीनि नामानि । वा च उतेत्यादयो निपाताः ॥ पदविच्छेदोऽसंहितः ॥ २३८ ॥ पदे पदे विच्छेदो विलम्बेनोच्चारणं असंहितः । न संहिता यस्मिन्सः पदपाठः । षिसङ्गकेषु विसर्गस्य लोपादिसर्गान्तत्वस्वरान्तत्वनिर्णयार्थं सन्धिग्रानि लिख्यन्ते । विभ्रष्टाजदजयस्पृधः । विभ्रष्टा विभ्राजति । इति पदद्वये ऊष्मान्तं ऊष्मा विसर्गः । अन्यत्र स्वरान्तम् । विश्वा रूपाणि ॥ २३९ ॥ पृथिव्यापदं मन्थीत्यस्मिन्स्वरान्तमन्यत्रोष्मान्तम् । इमापदं विश्वा ।वः । ब्रह्म हरी युक्ता जजान नु कम् । इति सप्तसु स्वरान्तम् । अन्यत्रोष्मान्तम् । इमा रुद्रायेत्यादि । वृष्णो बभूव नासत्या भिषजा न आवोढं या देवा हविषा नो रुडातः । नोऽअच्छ विश्सुञ्चइत्येतेषु दशसु तादृति स्वरान्तमन्यत्रोष्मान्तम् । ताः । नः । हिन्वन्तु । हविर्हस्पत्योः साध्यादा इति यथासङ्ख्यं स्वरान्ते अन्यत्र विसर्गान्ते । आग्नीध्रीः । वसुभिः ॥ २४० ॥ वरिवो विवदँ्युवमित्यनयोर्धिष्ण्यास्वरान्तमन्यत्र विसर्गान्ते । ऊचिषे । धिष्ण्या ये ॥ मर्त्तो वृत मर्त्तव्यग्निः परोमर्त्तस्ते मर्त्तइति च ॥ २४१ ॥ एतेषु चतुर्षु मर्त्तशब्दोऽयकारः । अन्यत्र मर्त्यः ॥ क्रमोक्तावृत्तिः पदेषु ॥ २४२ ॥ क्रमप्रकरणे उक्ता आवृत्तिः

पदपाठे स्यादवसानवर्ज्जम् ॥ तद्यथा॥ पूर्व्वस्योत्तरसं॰-
हितस्य ॥ २४३ ॥ स्थितोपस्थितमवगृह्यस्य ॥ २४४
अन्तःपदे दीर्घीभावे ॥ २४५ ॥ विनामे ॥ २४६ ॥ प्रगृह्ये ॥
२४७ ॥ रिफिते निरुक्ते ॥ २४८ ॥ तत्रावग्रहवतः पदस्य
स्थितोपस्थितं स्यात् । ये विषयः स्थितोपस्थिते वेष्टने
न भवन्ति ते तत्प्रकरणे एव दर्शिताः । कुत्राव-
ग्रहः कर्त्तव्यस्तत्राह ॥ समासेऽवग्रहो ह्रस्वसमका-
लः ॥ २४९ ॥ समास इत्यधिकारः । समासेऽवग्रहो
ह्रस्वसमकालः एकमात्राकालो विरामः स्यात् । स च
चर्चायां प्रदर्शनीयः सम्प्रदायात् । अन्तःपार्श्व्यमित्य-
न्तः । पार्श्व्यम् । अनुरूपमित्यनु । रूपम् । व्रतपतऽइ-
ति व्रत । पते । पुरोगाऽइति पुरः । गाः । मणिवा-
लऽइति मणि । वालः । ऋक्सामाभ्यामित्यृक् । सा-
माभ्याम् । अवग्रह इत्यधिकारः ॥ तरतमयोश्चातिश-
येऽदक्षिणप्रत्यासङ्गे ॥ २५० ॥ समासाभावादारम्भः ।
अतिशये विद्यमानयोस्तरतमयोरवग्रहः स्यात् । द-
क्षिणशब्दः प्रतियोगी न चेत् । पूर्णतरमिति पूर्ण ।
तरम् । प्रप्रितममिति प्रप्रि । तमम् । अदक्षिणेत्यादि
किम् । द्यावापृथिव्योर्हदिशां पार्श्वं विभिस्त्वेषां देवानामु-
त्तरमित्यत्रोत्तरमित्येव । अतिशये किम् । कारोतरः ॥
श्वीतमहूतमस्तूतमगोपातमरत्नधातमवसुधातमाः पू-

र्व्वेषु ॥ ३५१ ॥ एते शब्दाः पूर्वेणावगृह्यन्ते । देववी-तममिति देव । वीतमम् । देवहूतममिति देव । हूतमम् । सुहूतममिति सु । हूतमम् । सुगोपातमऽइति सु । गोपातमम् । सुधातमऽइति सु । धातमः ॥ सर्प्पदेवजनेभ्यश्च ॥ ३५२ ॥ इदं च पूर्वेणावगृह्य-ते । सर्प्पदेवजनेभ्यऽइति सर्प्प । देवजनेभ्यः ॥ तूणवध्ममुत्तरेण ॥ ३५३ ॥ इदमुत्तरेणावगृ-ह्यते तूणवध्ममिति तूणव । ध्मम् ॥ रायस्पोषदे विज्ञावेति च ॥ ३५४ ॥ इमे चोत्तरेणा-वगृह्यते । रायस्पोषदऽइति रायस्पोष । दे । विज्ञावेति विज्ञा । वा ॥ बहुप्रकृतावागन्तुना पर्वणा ॥ ३५५ ॥ बहुपदसमासे पाश्चात्कालिकेन पदेनावग्र-हः स्यात् । प्रजापतिरिति प्रजा । पतिः । सुप्रजाऽइ-ति सु । प्रजाः ॥ तद्वति तद्धिते न्यायसंहितं चेत् ॥ ३५६ ॥ वतीति तन्त्रेण द्विरुच्चारितं तदस्ति यस्मिंस्तः तस्मिन्नन्वर्थे विद्यमाने तद्धिते वति प्रत्यये च परेऽव ग्रहः स्यात् । शास्त्रोक्तसन्धिमत्पदं चेत् । मधुमदिति मधु । मत् । सँव्वतमिति सम् । व्वतम् । न्यायसंहितमिति किम् । मरुत्वान् । अत्र "स्पर्शोऽपञ्चम" इति तृतीयः शास्त्रसिद्धोपि न कृतः । अतो न भवति ॥ शश्वन्न्या-तातिषु च ॥ ३५७ ॥ शमित्यादिषु चतुर्ष्ववग्रहः स्या-

त् । ऋतुथाऽइत्यृतु । थाः । अमृतत्वमित्यमृत त्वम् । देवत्रेति देव । त्रा । ज्येष्ठतातिमिति ज्येष्ठ । तातिम् ॥ धात्वर्थे यकारे स्वरपूर्वे ॥ ३५८ ॥ धातुसञ्ज्ञानिमित्तभूतो यकारः क्यजादिः स्वरपूर्वे तस्मिन्परेऽवग्रहः स्यात् । इषयमाणाऽइति इष । यमाणाः । धात्वर्थे किम् । जायमानः ॥ वांसौ च भूतकाले स्वरेण ह्रस्वादनुषि ॥ ३५९ ॥ स्वरेण तृतीया पञ्चम्यर्थे । ह्रस्वस्वरात्परभूते वांसशब्दे भूतकालार्थे परेऽवग्रहः स्यात्स उषरूपो न चेत् । यज्ञिवांसऽइति यज्ञि । वांसः । ससृवांसऽइति ससृ । वांसः । स्वरेण किम् । चिकित्वान् । ह्रस्वात्किम् । अन्यथाखीदम् । जिगीवांसः । भूतकाले किम् । सुविद्वांसऽइति सु । विद्वांसः । अनुषि किम् । तस्थुषः ॥ प्रत्नपूर्वविश्वेमर्तुभ्यस्था ॥ ३६० ॥ एभ्यः पञ्चभ्यः स्थाप्रत्ययेऽवग्रहः स्यात् । प्रत्नथेति प्रत्न । था । पूर्वथेति पूर्व । था । विश्वथेति विश्व । था । इमथेतीम । था । ऋतुथेत्यृतु । था ॥ ह्रस्वव्यञ्जनाभ्यां भकारादौ विभक्तिप्रत्यये ॥ ३६१ ॥ ह्रस्वाद्व्यञ्जनाच्च परे भकारादौ विभक्तिसञ्ज्ञे प्रत्यये परेऽवग्रहः स्यात् । अग्निभिरित्यग्नि । भिः । धावद्भ्यऽइति धावत् । भ्यः । तक्षभ्यऽइति । तक्ष । भ्यः । समिद्भिरिति

समित् । भिः । ह्रस्वेत्यादि किम् । व्रातेभ्यः ।
पत्नीभ्यः । विभक्तीति किम् । गर्द्दभः । स्विति चान-
न्तौ ॥ ३६२ ॥ ह्रस्वव्यञ्जनाभ्यामकृतषत्वे स्विति
विभक्तिप्रत्यये परेऽवग्रहः स्यात् हृत्स्विति हृत् ।
सु । अप्स्वित्यप् । सु । धामस्विति धाम । सु । अन-
न्तौ किम् । अग्निषु । स्नुषु । विभक्तीति किम् ।
असुम् । ह्रस्वेति किम् । यासु । वर्णसङ्ख्येऽन्यत-
रतः ॥ ३६३ ॥ समास इति मण्डूकप्लुतिन्याये-
नानुवर्त्तते मध्ये त्वसम्भवान्न सम्बध्यते । वर्णवाच-
के सङ्ख्यावाचके च समासे विकल्पेनावग्रहः स्यात् ।
धूम्ररोहितऽइति धूम्र । रोहितः । पञ्चदशेति प-
ञ्च, दश । त्रयोदशेति त्रयः । दश । विभाषितत्वात् ।
त्रिनवत्रयस्त्रिꣳशाविति त्रिनवत्रयस्त्रिꣳशौ । अत्र
न । व्यवस्थितविकल्पः । सम्प्रदायानुसारेण पठनी-
यम् ॥ अनुदात्तोपसर्गे चाख्याते ॥ ३६४ ॥ अनुदा-
त्ते उपसर्गे आख्यातपरेऽवग्रहः स्यात् । उपधावती-
त्युप । धावति । सम्भरन्तीति सम् । भरन्ति ॥ गिरि-
त्रशयोः ॥ ३६५ ॥ गिरिशब्दोऽवगृह्यते त्रशयोः पर-
योः । गिरिशेति गिरि । श । गिरित्रेति गिरि । त्र ॥ इ-
ववकाराम्रेडितायनेषु ॥ ३६६ ॥ इववकारादिषु चतुर्ष्वव-
ग्रहः स्यात् । स्रुचीवेति स्रुचि । इव । वषट्कारै-

भिरिति वज्रट् । कारेभिः । सꣳसमिति सम् । स-
म् । प्रायनायेति प्र । अयनाय ॥ एकात्समी-
ची ॥ ३६७ ॥ एकशब्दात्परः समीचीशब्दोऽवगृह्य
ते । एकम् । समीचीऽइति सम् । ईची । एकात्कि-
म् । समीचीऽइति समीची । उरसा ॥ त्वायवः शꣳयो
र्बर्हिर्द्धाऽस्मयुमृन्मयीऽसुम्नयाशुया साधुया धृ-
ष्णुया विशालमनुया ॥ ३६८ ॥ एतान्येकादशप-
दानि सावग्रहाणि स्युः । त्वाऽयवऽइति त्वा । य-
वः । शꣳयोरिति शम् । योः । बर्हिर्द्धेति बर्हिः । धा ।
अस्मयुमित्यस्म । युम् । मृन्मयीमिति मृत् । म-
यीम् । सुम्नयेति सुम्न । या । आशुयेत्याशु । या ।
साधुयेति साधु । या । धृष्णुयेति धृष्णु । या । वि-
शालमिति वि । शालम् । अनुयेत्यनु । या ॥ मृगयु-
मुभयादतोऽपामार्गं किम्पूरुषमिति च ॥ ३६९ ॥
एतानि चत्वारि पदान्यवगृह्यन्ते । मृगयुमिति मृ-
ग । युम् । उभयादतऽइत्युभय । दतः । अपमार्गेत्यप ।
मार्ग । किम्पुरुषमिति किम् । पुरुषम् ॥ अधीवा-
समित्येके ॥ ३७० ॥ एकशब्दो मुख्यार्थः । एतस्मा-
वग्रहं स्यात् । अधिवासमित्यधि । वासम् ॥ प्रति-
षेधे नावग्रहः ॥ ३७१ ॥ प्रतिषेधवाचिनि पूर्वपदे-
ऽवग्रहो न स्यात् । अत्नसा । अनिरा । उत्तरेण चा-

कारेण ॥ ३७२ ॥ प्रतिषेधवाचिनः परेणाकारेणा
वग्रहो न स्यात् । अनातताय । अनाधृष्याः ॥ द्वापू-
र्व्वात् ॥ ३७३ ॥ द्वा इति पूर्व्वम्पदं नावगृह्यते । द्वादश ॥
सङ्ख्यापूर्व्वश्च धा ॥ ३७४ ॥ सङ्ख्यावाचकपूर्व-
पदं धा इत्येतस्मिन्परे नावगृह्यते । त्रिधा । दश-
धा । कतिधा ॥ द्वन्द्वानि द्विवचनान्तानि स्वरान्तपू-
र्व्वपदानि ॥ ३७५ ॥ स्वरान्तपूर्वपदमेषां तानि द्विवच-
नान्तानि नावगृह्यन्ते । मित्रावरुणाभ्याम् । अ-
ग्निषोमौ । स्वरान्तेत्यादि किम् । ऋक्सामयोरित्यृ-
क् । सामयोः ॥ तद्धिते चैकाक्षरवृद्धावनिङ्गि-
ते ॥ ३७६ ॥ तद्धिते सत्येकाक्षरस्य पूर्वपदस्य वृद्धौ
उत्तरपदेनाव्यवहितायामवग्रहो न स्यात् । सौभा-
ग्यम् ॥ त्रैष्टुभेनेति त्रै । ष्टुभेन । अनिङ्गिते किम् । सा-
म्राज्यमिति साम् । राज्यम् । एकाक्षरे कि-
म् । आनुष्टुभमित्यानु । ष्टुभम् ॥ अञ्चतिसहत्योः
हल्लोपे ॥ ३७७ ॥ हल्लोपे सति अञ्चतिसहत्योः प-
रयोर्नावग्रहः स्यात् । प्राङ् । प्रत्यङ् । ऋताषाट् ।
हल्लोपे किम् । आच्च्योत्या । अच्य । पृतनासह्याये-
ति पृतना । सह्याय । अनुरुसुभ्यां हल्लोपे ॥ ३७८ ॥
अञ्चतौ सहतौ च परेऽवग्रहनिषेधो न स्यात् । उरु-
व्यञ्चमित्युरु । व्यञ्चम् । सुषाहमिति सु । षाह-

म् ॥ समिद्राभ्यां वत्सरः ॥ ३७९ ॥ सम् । इदा
आभ्यां वत्सरेऽवग्रहो न स्यात् । संवत्सरः । इदा व-
त्सरः । समिद्राभ्यां किम् । परिवत्सरऽइति प-
रि । वत्सरः ॥ प्राग्निभ्यामनित्यौ प्रश्ले-
षे ॥ ३८० ॥ प्र अग्नि इत्येताभ्यां इन्धधातुभिन्ने परे
एकीभावसन्धाववग्रहः स्यात् । प्राणः । आग्निद्-
म् । अनित्यौ किम् । प्रेद्धऽइति प्र । इद्धः । प्राग्नि-
भ्यां किम् । अपानऽइत्यप । आनः । वीद्ध्यायेति वि ।
इद्ध्याय ॥ जनयत्याऽओषधयो दृषायिषत नहि च
नाश्मभ्यमजावयो वल्गम् ॥ ३८१ ॥ जनयत्या इ-
त्यादीन्यष्टौ नावगृह्यन्ते ॥ जनयत्यै त्वा । ओषधयः
प्रति । भागमादृषायिषत । नहि तेषाममा च न ।
कदा चन । पावकोऽअस्मभ्यम् । उपहूताऽअजाव-
यः । अहल्लँवल्गमुत्किरामि ॥ समानोऽनश्वमेधे ॥
॥ ३८२ ॥ समानशब्दो नावगृह्यते । अश्वमेधे न चे-
त् । ये समानाः । अनश्वमेधे किम् । समानऽइति
सम् । आनः । तेजोऽसीत्यध्याये एतदारभ्याध्यायच-
तुष्टयमश्वमेधसञ्ज्ञकम् ॥ वायुरसजातः समुद्रोऽहो-
रात्रे विश्वानरो विश्वाहाग्रहायणोऽसपत्ना गो-
धागे धमाऽआशुशुक्षणिर्न्यग्रोधः पुरोडाशः प्रावशो-
निरगोतमतस्करान्यसस्मसाश्वत्थऽउपस्तिम्नीकिल्बि-

श्वामित्रो गोपाम्न्यऽऽगमङ्गानि कच्छीवन्तन्दधा-
त्वीरवन्तीहारेण प्राष्टता घनाघनऽईहङ्ग्न्याहङ्-
शूघनास: कुशवङ्कुचर: प्रियङ्गवो नीवारा एकादश
षोडश चन्द्रमाऽआयुवो व्याघ्रोऽनड्वान्नगविष्ठिठ-
र: कपर्द्दिने पुलस्तये निषङ्गिणे कुलालेभ्य: का-
र्मारेभ्य: पुञ्जिष्टेभ्यो द्दीप्याय नीप्याय किर्ठ॰ शि-
लायैलष्टदा: शूकाराय शूकृताय चराचरेभ्य: पाराव-
तान्गोलत्तिकाऽऽभुरजगरो व्विपन्न्यवो दाशायणाऽ-
आयुश्र्ठ॰ सुरामं बृहस्पतिर्व्वनस्पतिर्न्नराशर्ठ॰ सुर-
भिर्न्निरिष्टठायै ॥ ३८३ ॥ एतानि सप्ततिपदानि नावगृ-
ह्यन्ते । इदं दिक्प्रदर्शनार्थम् । अन्यान्यप्येवंविधानि
द्रष्टव्यानि । उतम्भनम् । आदिसंशयात् । विशौजा:
अन्यायसमासात् । उगणा: । उपसर्गैकदेशलोपात् । पुं-
स्त्वम् । अनुनासिकोपधत्वात् । अवत्तानाम् । धात्वे-
कदेशलोपात् । इत्यादीनि । तथा चोक्तम् । आदिम-
ध्यान्तलुप्तानि समासान्न्यायभाञ्जि च ॥ नावगृह्णन्ति
कवय: पदान्यागमवन्ति च ॥ १ ॥ चकारोऽनुक्तसमुच्चया-
र्थ: । तेन धृजीमानित्यत्र नावग्रह: । अत्र सम्प्रदाया-
नुसारेण व्यवस्था ॥ अनितावन्तर्व्विकारागमम्प्रागु-
क्ता ॥ ३८४ ॥ इतिरहितं पदं मध्यस्थविकारागम-
सहितं पूर्व्वमुच्चार्य्य स्थितोपस्थितं कार्य्यम् । श्रेयस्कर ।

श्रेयः करेति श्रेयः । करा । आयुष्पाः । आयुःपाऽइत्या-
युः । पाः । ऋतस्पते । ऋतपतऽइत्यृत । पते । अहर्प्प-
तये । अहःपतयऽइत्यहः । पतये । दुदुक्षन् । दुधुक्ष-
न्निति दुधुक्षन् । विश्पतीवेति च ॥ ३८५ ॥ इदं च पू-
र्व्वमुक्ता स्थितोपस्थितं कर्त्तव्यम् । विश्पतीवोप-
स्थिते ॥ ३८६ ॥ विश्पतीदमिवे परे प्रकृत्या भव-
ति । उपस्थिते विद्यमानं चेत् । विश्पती व । वि-
श्पतीवेति विश्पती । इव । सर्ठ०हितावदवग्रहः
स्वरविधौ परश्च सर्व्वञ्चेदनुदात्तम् ॥ ३८७ ॥ अवग्र-
हयोग्यं पूर्वं पदं स्वरविधौ संहितावद्भवति परं च स
र्वञ्चेत्संहितावत्सर्वमनुदात्तञ्चेत् । आस्वरे स्त्यऽइत्या-
स्वरे । स्त्यः । "नोदात्तस्वरितोदय"मिति निषेधात्प्र-
चयो न । प्रजावतीरिति प्रजा । वतीः । अत्र "उदात्ता-
द्नुदात्त"मिति वकारस्य स्वरितः । वह्नितममिति
वह्नि । तमम् । अत्र "स्वरितात्पर"मित्यनेन तममित्य
स्य प्रचयो भवति । स्वरविधौ किम् । धावद्भ्यऽइति धाव
त् । भ्यः । अत्र संहिताया अभावा"त्स्पर्शोऽपञ्चम"
इति तृतीयो न । सर्वानुदात्तत्वाभावे विशेषमाह ॥
इति परस्मिंश्चेदङ्गीचान्तोदात्ते मध्योदात्ते पर्व्वणि का-
र्य्यस्य वा ॥ ३८८ ॥ परमित्यनुवर्त्तते । अन्तोदात्ते-
मध्योदात्ते वा पदे इतः परभूते चर्च्चापदे परो

भागस्तिर्यङ्नीचोऽविकृतोऽनुदात्तो यस्मिन्नेतादृशः स्यात् । व्विकृच्चुरिति वि । कृच्चुः । सान्तपनेभ्यऽइ-ति साम् । तपनेभ्यः । अत्र पूर्वसूत्रेण कृच्चुरित्यनयोः प्रचये प्राप्तेऽनेनानुदात्तएव विधीयते ॥ अन्तःपददीर्घीभावे ॥ २८९ ॥ पदमध्यस्थं दीर्घत्वं यस्य पदस्य तस्मिन् स्थितोपस्थितं स्यात् । मामहन्ताम् । ममह न्तामिति ममहन्ताम् । पूरुषः । पुरुषऽइति पुरुषः । इदं पदान्तस्थत्वाभावोपलक्षणम् । आयुनक् । अयुनगित्ययुनक् । अन्तःपदे किम् । पिब सोमम् । पिबा सोमम् ॥ विनामे ॥ २९० ॥ अन्तःपदइत्यनुवर्त्तते । अन्तः पदे दन्त्यस्य मूर्द्धन्यभावे सति स्थितोपस्थितं स्यात् । सुषाव । सुसावेति सुसाव । सीषधाम । सीसधामेति सीस । धाम । अन्तःपदे किम् । आपो हि ष्ठ । हिस्थ ॥ प्रगृह्ये ॥ २९१ ॥ प्रगृह्ये पदे स्थितोपस्थितं स्यात् । द्वेऽइति द्वे । द्यावापृथिवीऽइति द्यावा । पृथिवी । इन्द्रवायूऽइतीन्द्र । व्वायू । चमूऽइति चमू । अस्मेऽइत्यस्मे । त्वेऽइति त्वे ॥ मे ॥ २९२ ॥ इत्युदात्तस्य प्रगृह्यत्त्वात् । मेऽइति मे । रायः । उदात्तं किम् । मे व्वरुण । अमीऽइत्यमी ॥ प्लुतमितौ ॥ २९३ ॥ प्लुतमक्षरमितौ प्रकृत्या । एतस्योदाहरणं क्रमप्रकरणे वक्ष्यते ॥ "पदान्तपदाद्योः सन्धिरिति नियमात्

प्लुतस्य इतौ परे एकपदस्थत्वा"त्कण्ठ्यादिवर्णं ए-
कार"मित्यस्य प्राप्तौ प्रकृतिभावविधानं व्यर्थन्तज्ज्ञा-
पयति । इतौ पदान्तकार्यम्भवति तेन दुरोणसदिति
दुरोण । सत् । इत्यादौ "नान्तःपद"इति निषेधाभा-
वा"त्स्पर्शोऽपञ्चम"इति तृतीयादि भवति । परेण
सन्धिस्तु उभे संहिते चाहेत्युक्तत्वात्स्थितस्य भिन्नप-
दत्वाद्भवति । अपहतमित्यप । हतम् । प्रतिज्ञातवच-
स्य धर्मा न भवन्ति । प्रतिज्ञातवचधर्मभूतायामनोघ-
नन्द्रन्या"अवग्रहः पदान्तव"दिति सिद्धेऽपि ह्यवग्र-
हे पुनर्जकारविधानात्तेन यज्ञोऽइति यज्ञो ॥ ओका-
रस्य ॥ २९४ ॥ अयमितौ प्रकृत्या । वायोऽइति वा-
यो । "ओकारस्य पदान्ते"इत्यनेन प्रगृह्यत्वे स्थितो-
पस्थिते सति प्रगृह्यत्वात्प्रकृतिभावे सिद्धे पुनर्विधा-
नं नियमार्थं इतावेव नान्यत्र । विष्णवेते । वायवि-
ह । अनवग्रहः किम् । गविष्टाविति गो । इष्टौ ।
अत्र गोशब्दे स्थितोपस्थिते मा भूत् । "उकारो-
ऽपृक्त"इत्यनेन प्रगृह्यत्वात्स्थितोपस्थिते ॥ उकारोऽ-
पृक्तो दीर्घमनुनासिकम् ॥ २९५ ॥ इतौ परे उइ-
तिपदं दीर्घमनुनासिकं ऊँ इति रूपमापद्यते । इति
पदं परे स्थितेऽपि । ऊँऽइत्यूँ इति सिद्धम् । अन्तरि-

ष्यः । सट्टध्यक्षः । कारिति कः । “अनुदात्तमित्युक्त-
त्वात् । कः । स्वित् । स्वरिति स्वः । स्वभितम् । प-
दमित्युक्तत्वात्पदावयवे न । राजस्वऽइति राज ।
स्वः । आवरित्यावः । वरिति वः । “समानस्येत्यु-
क्तत्वात् । सन्तु । वः । अन्तः श्लेषऽइत्यन्तः । श्लेषः ।
अत्र पूर्वभागेऽवग्रहः पदान्तवदिति स्थितं प्राप्तं “नन्दिव-
तिकरणमित्युक्तत्वान्न भवति ॥ त्रिपदाद्यावर्त्तमाने
सङ्क्रमः ॥ २८६ त्रिपदादीनां पुनरावृत्तौ सत्यां स-
ङ्गः सङ्क्रम्यते इति सङ्क्रमः । आवृत्तानि पदान्य
तिक्रम्याग्रिमपरपदं न कर्त्तव्यम् ॥ अनन्तरे ॥ २८७ ॥
शक्तस्यार्थस्यानन्तर्ये सङ्क्रमः स्यात् । शक्तस्या-
नन्तर्ये गन्धर्वस्त्वा विश्वावसुरित्यत्र विश्वस्यारि-
ष्ट्यै इत्याद्येकदेशोच्चारितं पुनरिन्द्रस्य बाहुरित्यादौ
सङ्क्रम्यते । अर्थतो मधुश्च माधवश्चेत्यत्रोच्चारितस्य
पदसमुदायस्य शुक्रश्च शुचिश्चेत्यादौ सङ्क्रमः ॥
द्विपदैकपदान्यप्यनुवाके ॥ २८८ ॥ द्विपदे एकपदं
च एकस्मिन्ननुवाके पुनरावृत्तौ सङ्क्रम्यते । अत्रा-
प्यनन्तरइति वर्त्तते तेन याऽओषधीरित्यत्रैकदेशोच्चा-
रितस्य याइत्यस्य याःफलिनीरित्यत्रोच्चारणम् ॥ त्रि-
रावृत्ते ॥ २८९ ॥ त्रिरावर्त्ततेऽयं सङ्क्रमः स्यात् ।
स्वाजः । च । मे । प्रसवः । प्रयतिः । आ छन्दः ।

प्रमा । प्रतिमा । एकइत्यादिकिम् । पवित्रम् । अ- सि । भूः । असि । शमी । त्रिरावृत्ते किम् । ऽव्रतम् । क्षणुत । ऽव्रतम् । क्षणुत । इषे । त्वा । ऊर्ज्जे । त्वा ॥ गूढे ॥ ३०० ॥ द्विरावर्त्तनेऽपि सङ्क्रमः स्यात् । गूढं नाम द्विवारमुच्चारणीयम् । उभयाभिप्रायेण मध्ये एकपदं पठ्यते । यन्ताऽसि यमनः । ध्रुवोऽसि धरुणः । अत्र यन्ता । असि । यमनः । ध्रुवः । धरुणः । संहितायां द्विरावृत्तस्याप्यसीत्यस्य सङ्क्रमो भवति । याः फलिनीरित्यत्र तु याः । च । पुष्पिणीः । अस्य याः शब्दस्य चतुर्वारमुच्चारणीयस्य त्रिवारमुच्चारणात् । अपुष्पा इत्यनेनापि सम्बन्धं द्योतयितुं न संक्रमः ॥ पदसमूहे ॥ ३०१ ॥ पदानां बहुवारमुच्चारणे सङ्क्रमः स्यात् । व्राङ्श्च मऽइत्यध्याये च मे इतिपदद्वयस्यानुवाकान्तरेऽपि सङ्क्रमः ॥ अपराङ्गे ॥ ३०२ ॥ अपरस्याङ्गे अपराङ्गत्वेनैव पुनरावृत्ते संङ्क्रमः स्यात् । स्वाहा यज्ञमिति मन्त्रे स्वाहा द्यावापृथिवीभ्याᳪ स्वाहा वातादित्यनयोः स्वाहाशब्दयोः सङ्क्रमः स्यात् । रमे स्वाहेत्यस्य न सङ्क्रमः । अपराङ्गत्वाभावात् ॥ अस्वरविकारे ॥ ३०३ ॥ स्वरभिन्नत्वाभावे सङ्क्रमः स्यात् । सुष्मा चासि प्रथमस्याप्यसिशब्दस्याद्युदा-

त्त्वात् । शिवा चासीत्यस्यानुदात्तत्वान्न सङ्क्रमः ॥
अलिङ्गविकारे ॥ ३०४ ॥ लिङ्गभिन्नत्वाभावे सङ्-
क्रमः स्यात् । भद्रो नऽइति मन्त्रे भद्रशब्दस्य भि-
न्नलिङ्गत्वान्न सङ्क्रमः । अग्नेर्भागोऽसीत्यनुवाके
नपुंसकस्य स्पृतशब्दस्य सङ्क्रमः । व्रातः । स्पृतः ।
गर्भाः । स्पृताः । दिशः । स्पृताः । इत्येतेषु पुंल्लिङ्ग-
स्त्रीलिङ्गत्वान्न सङ्क्रमः । सप्त पथाऽसीति मन्त्रे
प्रथमस्य समशब्दस्य नपुंसकविषयत्वाद्द्वितीयस्य पु-
ल्लिङ्गविषयत्वान्न सङ्क्रमः ॥ असमाने ॥ ३०५ ॥ अ-
समाने विषये पुनरावृत्ते सङ्क्रमः स्यात् । आयुर्य-
ज्ञेनेत्यत्रायुरादिर्यज्ञक्लृप्तेरसमानत्वात्सङ्क्रमः । यज्ञ-
स्य तु यज्ञक्लृप्तेः समानविषयत्वान्न सङ्क्रमः ॥ संहि-
तायाञ्च ॥ ३०६ ॥ आर्ष्यां चसंहितायां पुनरावृत्तौ
सङ्क्रमः स्यात् । हिरण्यगर्भऽइत्येषः । तस्मन्नुदेत्या-
दिप्रतीकपठितेषु सङ्क्रमः कार्यः । एषां मन्त्राणां
ब्रह्मयज्ञादौ पठनं कार्यमिति केचित् । नेत्यपरे ॥
अवसानार्थम्पुनर्ग्रहणम् ॥ ३०७ ॥ समाप्तिद्योतनार्थं
पुनरुच्चारणं स्यात् । आकूत्यै प्रयुजे इतिमन्त्रे द्विती-
यादिस्वाहाकारस्य सङ्क्रमे पूर्णाऽग्नये स्वाहेत्यत्र
न सङ्क्रमः ॥ अधिकारार्थम् ॥ ३०८ ॥ पदस्याधि-
ककार्यज्ञापनार्थं च पुनरुच्चारणं स्यात् । व्राजश्चेति

मन्त्रे च मे इत्यनयोः सङ्क्रमेऽपि स्वरिति स्वः । च
मे इत्यत्र रिफितत्वज्ञापनार्थं न सङ्क्रमः ॥ उपसर्गे
प्रश्च ॥ ३०९ ॥ पूर्वोक्तस्य परित्यागोऽपि क्वचित्स्यात् ।
व्यवस्थितविषयोऽयम् । चशब्दोऽप्यर्थे । "द्विपदैकपदा
नीत्यनेनोक्तः सङ्क्रमः । तदेवाग्निरिति मन्त्रे न भव-
ति ।"संहितायां चेत्यनेन विहितः सङ्क्रमः । लो-
कत्ताऽइन्द्र मित्यत्र न भवति । उक्तञ्च । पुनरुक्तानि
लुप्यन्ते पदानीत्याह शाकलः ॥ अलोपइति यास्क-
स्य काण्वस्यार्थवशादिति ॥ अत्र सम्प्रदायानुसारेण
निर्णयः ॥ इति पदलक्षणम् ॥ अथ क्रमलक्षणम् ।
क्रमः स्मृतिप्रयोजनः ॥ ३१० ॥ संहितायाः पदानां
च स्मृतिः स्मरणं प्रयोजनमस्य सः । संहिताया अवसा-
ननिर्णयस्येत्यादि । एवं प्रयोजनमुक्त्वा तल्लक्षण-
माह । क्रमइत्यधिकारः । अध्यायपरिसमाप्तेः ॥
द्वे पदे सन्धायात्युत्तरेणोत्तरमावसानादृक्क्रमवर्ज्जम् ॥
३११ ॥ एतदुत्तरमवसानपर्यन्तं द्वे द्वे पदे संहितया
उच्चारयति स क्रमः स्यात् । इषे त्वा । त्वो-
र्ज्जे । एवं पाहीति पर्यन्तं यत्र सङ्क्रमस्तत्र गल-
त्पदानि त्यक्त्वाऽग्रिमैः पदैः सन्धानं कर्त्तव्यम् ।
सङ्क्रमे सन्धिशास्त्रस्याचार्येणाभिहितत्वात् । यु-
नज्मि सः । सकस्मै ॥ सङ्क्रमे च वैष्णवान् ॥ ३१२ ॥

कर्मण्याचक्षते यथा सिद्धे महानसेऽन्नाष्टमकस्
जुहुयाद्गृहस्यान्नमविच्छिन्नमक्षय्यं भवति। मा नो महा-
न्तमिति तिलाहुतीनामयुतं जुहुयाद्गृहे बालानां
परिजनस्यारोग्यं भवति मा नस्तोक इत्यृगुक्तानि क-
र्माणि भवन्ति ॥ ५ ॥ नमो हिरण्यबाहव इति षड्भि-
रनुवाकैः कटुतैलाक्तान् राजसर्षपान् जुहुयाच्छत्रुरुत्साद-
यति फट्कारेण देवस्योपरि मालायामधः शिवमम-
वलम्ब्य शस्त्रेण शिरसि रुधिरं स्राव्य तेन यष्टिक-
टुकेनाभ्यज्य देवं कराङ्गुलिनखेनोत्पाट्य शत्रोर्नाम
स्मरञ्जपेत्सर्वबलं० शत्रुमुत्सादयेदेवं कृत्स्नं ग्रामं
नगरं वैतान्हा राजानमहोरात्रेण ब्राह्मणमर्द्धेन
क्षत्रियं त्रिभागेन वैश्यं० षड्भागेन शूद्रं० स्त्रियं
वा व्याहृतं कर्मत्याचक्षते ॥ ६ ॥ अथ वशीकर्तुं च्छु-
म्पालाशाश्वत्थापामार्गकरतविल्ववेतसोशीरादीन्प्र
तिवर्णं प्रतिमन्त्रं दधिमधुघृतक्षाराक्तानामयुतं जुहु-
यात्क्रमशो वर्णचतुष्टयं वशमानयत्यथ राज्यकामः
कुमुदसौगन्धिकनीलोत्पलादीन् पूर्वकल्पकारोपदेशा-
च्चाक्षोर्भगवतो तूपतिष्ठते नमः सिकत्यायेति क-
लशमभिमन्त्र्याष्टशतेन राजानं स्नापयेत्सर्वविनाय-
केभ्यो भयं न भवति रोगाभिभूतं स्नापयेन्मुच्यते स-
र्वरोगैर्नमो वः किरिकेभ्य इति तिलाहुतीनामयुतं जुहु-

यात्काषीपणानाए सहस्रमुत्पद्यते. पामार्गसमिद्भिः सु-
वर्णगुग्गुलप्रतिमानां चतुर्गोत्कृत्याष्टसहस्रं जुहुयादल-
ङ्कृतां कन्यां लभते। अथ वा सुवर्णशतं गोशफेनैका
दशसहस्रमाज्यहोमात्तावत्यो गावः स्युस्तिलतण्डुला-
नाढं शतसहस्रेण सर्वसम्पदस्य तिलयवधान्यशतपु-
ष्पमयीं प्रतिकृतिं कृत्वा जुहुयाद्ग्राममान्यवश्यौस्याता-
सु पलपद्मानाढं शतसहस्रेण स्वरूपिणी राजलक्ष्मीर्भ-
वति चणकसमिधानां गुग्गुलुगुटिकानाढं शतसहस्रं
जुहुयात्स्फीतसामन्तराज्यं प्राप्नोति देवस्य दक्षिणायां
मूर्तौ बिल्वसमिद्भिर्महाराज्यं महाचतुष्पथे वल्मी-
कमृदा गोमयेन लिङ्गं प्रतिष्ठाप्य रुद्राध्यायेनाभि-
मन्त्र्य एतया पायसमन्वहं बलिमुपहरेद्भूतेभ्यो भूति-
कामो देवस्य दक्षिणस्यां मूर्तौ वचाफलमर्धं वा सूक्ष्मं पि-
ष्ट्वा ताम्रभाजने न्युप्य कपिलाघृतेनालोड्य प्रादेशमन्या-
ष्टसहस्रमभिमन्त्र्य पिबेदप्रतिहतवासः स्याद्वाक्ष-
द्भिश्चौदुम्बरसमिद्भिर्दध्यक्ताभिर्महागोस्वामी स्यान्न च
गावः क्षीयन्ते बिल्वफलैर्घृताक्तैः सुवर्णमासिद्धे रज-
तमेतेनैवौदुम्बरामलकौ हरीतकिविभीतका व्याख्या-
ताः ॥ ७ ॥ अन्तर्धानमिच्छन्पर्वतशिखरमारुह्य क-
णगुग्गुलुतान्नं सहस्रमभिमन्त्र्य देवस्य हस्ते निवे-
द्य तावज्जपेद्यावद्धूमायते पूर्णे शतसहस्रे प्रज्व-

अथापि ज्वलन्त्यां ध्यायमानो सर्वलोकवशीकरणं श्म-
शानाग्ने पादप्रसारित्वं ज्वलिते चाकाशगामित्व
ठं॰ कङ्कालो शर्मांकाभः सत्त्वानां पृथिवीं पर्यटेद्-
दृश्यानुचरो भवति पद्मपुष्पाणामपि सुरभिचन्दनाक्तानां
घृतपूर्णाक्तानां वा चतुष्पथे शून्यायतने वाऽग्निमु-
पसमाधाय अष्टसहस्रं जुहुयात्स्वयमेव श्रीरूपं तिष्ठ-
ते येन यथेच्छति तथा करोति द्रापिऽन्यस्यऽइत्यर्थं
जुहुयाद्दासास्यानयाखिल भवन्ति ॥ ८ ॥ इमा बद्धा
येति तिलाज्यं जुहुयादयुतमयं चितं धनं स्यात्सहारोगो-
पहतो दूर्वाप्रवालैर्जुहुयाद्दीर्घायुर्भवत्यथ जनमानि पु-
ष्टिकामो दधिमधुघृतपायसं जुहुयान्महाग्रहभूत-
पिशाचादिभ्यो मोचयति वैकङ्कतपलाशसमिद्भिर्घृ-
ताक्ताभिरयुतं जुहुयाद्दारिद्र्यभयं न स्यान्महा-
जनेनाभिभूयमानस्तु यां जुहुयाच्छाल्मलीवैकङ्कतौ-
दुम्बरयवतिलानां चायुतं जुहुयाद्गृहे गवामुपघाते
गोष्ठमध्येऽग्निमुपसमाधाय वैकङ्कतसमिधो जुहुया-
च्छान्तिर्भवति यावत्तमनुष्यशालामेष विधिर्जनमरणे
च्छाये वाऽयुतं तिलाज्यं जुहुयाद्गृहग्रामनगरमध्येऽग्नि-
मुपसमाधाय श्मशानेषु चतसृषु दिक्षु देवबलीन्
दत्वा बलिभिरक्षितः कर्म क्षीरौदनघृततिलपिष्ट
माषान्नपरमान्नकृशरादीनि देवबलिमुपहरेत्सर्वत्रा-

पुष्पाणाई० रक्तचन्दनाक्तानां घृतपूर्णानां चतुष्पथे शून्यायतने वाऽग्निमुपसमाधाय श सहस्रं जुहुयादु र्वशीं रिमा कन्यान तेऽथ वा सुवर्णशतमयमग्निः सहस्रिणऽइति महाव्याहृतिवत्कर्म गवार्ठ० शांतिर्भवति गोशफेनाज्याहुतिसहस्रं जुहुयाद्गोशतं लभेदनेनैव समिद्धोमो हिरण्यपशुकामस्य सहस्रेति महाव्याहृतिवत्कर्म महाव्याहृतिवत्कर्म ॥ ६ ॥ इति यजुर्विधाने द्वितीयोध्यायः २। नमस्तऽइति चतसृभिः प्रत्यृचं यव गोधूमगवेधुकजातिलान्वा दधिमधुघृताक्तानेकार्हं जुहुयाद्धान्यं बहु भवत्येवादशरात्रेण जन मरणमुपशाम्यति पञ्च रात्रेण वा राष्ट्रोपद्रवं क्षिर्ठ०-शतिरात्रेण द्वे गोपद्रवं आसेन पृथिव्युत्पातं गवामुत्पाते गोष्ठेग्निमुपसमाधाय वैकङ्कतसमिधाज्ययुतं जुहुयाच्छान्तिर्भवति द्विगुणेन महाशान्तिर्भवति ॥ १ अयग्निरादिति सर्वत्र रक्षा कर्तव्या अग्नेभ्यश्च सर्षपान्सप्तभिर्मन्त्रितान्कृत्वा चतुर्दिक्षु क्षिपेत्सर्वत्र रक्षा कृता भवति पथि गच्छन्नपि तृतीयेन गच्छति सर्षपैर्ब्रह्म राक्षसभूतप्रेतपिशाचादिभ्यो गोभयमिति सर्षपैः स्कन्दग्रहादिभ्यः शिखोपरि जप्याभितो विद्याय राजा स्वपेद्रोगभयं न भवेत्सर्वरोगप्रशमनायौषधमभिमन्त्र्य प्राशयेद्द्वितीयेन सर्वसत्वानार्ठ० सर्षपैः सर्पाणां भस्मना

सर्वभूतानाᳫं स्तम्भनमाडन्तवन्धादग्निहोमेन लोहेन
त्रिशतᳫं॰ सहस्रमभिमन्त्र्य नागहृदि तत्कुल-
वान्नागो नागो नाशं गच्छति तालशब्देन भस्मनाऽती-
वरान्म्रत्सादनं करोति ॥ २ ॥ असौ य ऽइत्यृग्द्वयेनाहो-
रात्रयोरादित्यमुपस्थायाक्षय्यमन्नं भवति एवं दधिदु-
ग्धघृतेन स्नापयेद्रोगान्मुच्यते सविता प्रसन्नो भवति
वर्षति वाऽतसीपुष्पाणामयुतं जुहुयादवश्यो वश्यो
भवति सवितो वरदो भवत्युदकसक्त्वाहारो वेतससमि-
धां गुडक्षीराक्ताजामयुतं जुहुयाद्भगवानादित्यो स-
हस्रं प्रयुच्छति नमोऽस्त्विति घृतपायसᳫं॰ स्थंडि-
लमुपनिष्य कंप्रतापद्मास्तरे वा कृष्णाष्टम्यामारभ्य
यावत्कृष्णचतुर्दशीᳫं सहस्राभिमन्त्रितं कृत्वा निवे-
दयेत्कर्णोपगानाᳫं सहस्रमुत्पद्यते सिद्धे शतम् ॥ ३ ॥
प्रयुङ्क्तेति षड्भिराशुधान्यभिमन्त्र्य सङ्ग्रामोपनीताः
शत्रवः पलायन्ते न चाभिमुखास्तिष्ठन्ति दर्भकण्टका-
नामयुतं जुहुयादनामिकाङ्गुलिनखेनोत्पाद्य प्रा-
चीनाम स्वाञ्जपत्सवन्तᳫं॰ शत्रुमुत्सादयेद्ग्रामं न-
गरं वैकेनाहा राजानं प्रभूतशस्त्रवन्तं क्षत्रियं द्विव-
सविभागेन चतुर्थेन वैश्यं षड्भागेन शूद्रᳫं॰ स्वयं
रक्षाभूतेभ्यो रुद्रेभ्यः पलाशपुटेष्वेवमर्द्धमासेन जनम-
रणमुपसंयतीकृन्तनमुन्यन्तैः शान्तिषु यथोक्तेन व-

शोकरणमभिचारश्च शान्तिर्भवति ॥ ८ ॥ या ते रुद्रे-
ति जीवेणीयाः प्रतिसरं॰ सहस्राभिमन्त्रितमेका-
दशग्रन्थियुतं बालानां गुर्विणीनां च हस्ते बध्वा ता-
स्तु सुखेन वर्त्तन्ते धनिकधारणिकेभ्यो भयं न भवति
परि णऽइति वटप्ररोहसमिधोऽयुतं जुहुयादायु-
ष्मान् पुत्रस्त्वद्धन्ते मीढुष्टमेति महाभये चोरभये-
ऽग्निभये प्राणसंशये सङ्कटे वा मनसा जपेत् क्षेमे-
णागच्छत्यायाति च विकिरिद्रेति महाजनविरोधे रा-
ज्ञा वा प्रत्यनीकपरिहृतः सर्वौषधीर्जुहुयात्सर्वे
भग्नानसः शत्रवः पलाशानि सहस्राणीति महाज-
नमरणे राजोपद्रवे वा शाल्मलिविकङ्कत्यौदुम्बरस-
मिधो यवतिलांश्चैकादशरुद्रोऽभिमन्त्र्य शतसहस्रं
जुहुयात्क्षयरोगापायसेन भूतेभ्यश्चेहिंडालमारसेन रा-
क्षतान्मुच्यतेऽसङ्ख्यातानीति रक्तवासा रक्तोष्णी रक्त-
माल्यानुलेपनो देवमभ्यर्च्य श्मशाने एकवृक्षे नदीपु-
लिने चतुष्पथेऽरण्ये वैकादशशतानर्कमूलपरिवेष्टि-
तान्महाजातैलाक्तान्क्रमशोनाग्नौ प्रदीप्ते प्रक्षिपेत्क्ष-
चैनैकादशाभिमन्त्रितेन तद्भस्मना शत्रोः प्रतिकृ-
तिं कृत्वोरसि कटुतैलेनाभ्यज्य दक्षिणभूभागेऽवस्था-
प्य एकैकेन सहस्राभिमन्त्रितेन शरेणैकादशसु प्राणा-
यतनेषु विध्येदासहस्रयोजनगतं॰ शत्रुलोकगतं वा

शत्रुमुत्सादयेद्देवासुरयक्षगन्धर्वरक्षोभूतपिशाचादौ शा-
न्त्यर्थं देवं घृतक्षीरेण स्नापयेद् रुद्राध्यायेनाभिमन्त्र्य मा
नस्तोक इति वा घृतमधुपायससमयुतं जुहुयादघो-
द्देशमधिष्ठाप्य कर्पटवृक्षादिषु मध्यतऽएषऽएव विधिरु-
श्मादने फट्कारेण सर्वकर्माणि कारयेत् ॥ १० ॥
नमोऽस्तु त्रिकेण मध्याह्ने तुषकण्टकाञ्जुहुयात्सर्षपा-
न्वाऽहरहर्महाप्रत्यङ्गिरेऽष्टौ देवयोनयः सपिशाचाश्चरन्-
ति निशाचराः द्रवन्ति ये यातुधानास्ते सर्वे भस्मी-
भवन्त्यथ प्रदीप्तेऽग्नौ स्वकेशानालुप्य जुयाद्राहरशू-
लहस्तऽउपतिष्ठते यदुच्यते तत्करोति अथ वा ग्राम-
मुत्सादयति ॥ ११ ॥ अथ वा कृत्यामुत्पादयितुं कामो
रक्तवासा रक्तोष्णीषो रक्तमाल्यानुलेपनो देवमभ्यर्च्य
श्मशानाङ्गारेषु लोहकीलान्प्रादेशमात्रान्महातैलाक्ता-
नाष्टसहस्रं जुहुयादुत्तिष्ठति रक्ताङ्गी रक्तनेत्रोर्ध्वके-
शी कृत्या तां क्षिप्रमेव रुधिरमांसेन पूर्णपात्रेण तर्पये-
दन्यथा कर्तारमेव हिनस्ति सा त्वरितापितेति नाम-
कदूतिकान्वधिष्यामीति वक्तव्याभुकं व्यापादयस्वेति
सा तूर्णं वधमुत्पादयति यामाज्ञापयति त्रैलोक्याव-
स्थितमप्युत्सादयत्यथ वैकैकस्य शरीरस्य ग्रामे गृहे न
गरे वा व्याहृतं कर्मेत्याचक्षतेऽथ प्रयोगः शाकयाव-
कपयोभक्षो द्वादशरात्रमुपोष्य लघुभ्यो लघूनि गुरुभ्यो-

शुक्रिय सहस्रेषु संहितेषु महाग्नि तुलापुरुषचान्द्रा-
यणमध्यत एत एव विधिः कल्पग्रहणे त्वाचार्यमभिवा-
द्यानलभ्य पठेन्न चैवान्यथा पठेदिति न चैवान्यथा प-
ठेदिति ॥ १२ ॥ इति यजुर्विधाने तृतीयोऽध्यायः । ३ ।
परस्यात्मबलꣳ सङ्ग्रामयितुमिच्छन्कर्तुं शिलां कृ-
त्वा कुम्भोदकपूर्णेन सहस्राभिमन्त्रितेनात्मानꣳ स्ना-
पयेदश्मन्नूर्जमिति प्रदक्षिणं परिहृत्य कुम्भे शिलां कृ-
त्वा शत्रोर्नामग्राहं यं द्विष्मऽइति निरस्येत्कुले सर्व-
कजस्तस्य सङ्क्रामन्ति विभ्रतश्चक्षुरिति मन्त्राव्याहृति-
वत्कर्म देवस्य दक्षिणायां मूर्तौ मधुघृतपायसाक्तानां
पद्मानाꣳ सहस्रं जुहुयात्स्थण्डिलमुपलिप्यार्कप्रस्तरे
कृष्णाष्टमीमारभ्य यावत्कृष्णाचतुर्दशीं सप्ताहं सुवर्णं
लभते यो नः पितेति मन्त्राव्याहृतिवत्कर्म ॥ १ ॥ आ-
शुः शिशानऽइत्यनुवाकेनाप्रतिरथेन रथमायुधमात्मानं
चाभिमन्त्र्य सङ्ग्रामे प्रविशेज्जयी भवति चौरमहिष-
व्याघ्रसिꣳहराक्षससर्पादिभयेषु मनसा जपत्क्षेमं
भवति यमिच्छेत्स्तम्भयितुं तमनेन स्तंभयेदुदेनमित्युदु-
त्तरसमिदाज्यहोमः प्रजापशुपुष्ट्यर्थं सूर्यरश्मिरित्य-
र्कसमिद्भिः सुवर्णमुत्पद्यते विमानऽइति द्वयोर्मन्त्रा-
व्याहृतिवत्कर्म मध्यन्दिने समुद्रगां नदीं गत्वा हो-
ममधोऽग्निमुपसमाधाय घृताक्तानां कृष्णतिलाना-

ꣳ शतसहस्रं जुहुयाद्विमानैर्हंसवर्णैः समारूढाः स-
र्वालङ्कारभूषिताः सपरिच्छदाश्चाप्सरसऽआगच्छन्ति त-
त्र सर्वालङ्करणानि वासाꣳसि मुक्त्वा विवाससः स्वा-
नि गुह्यायतनानि दर्शयन्त्यो जले क्रीडन्ति यदि ता-
नि दृष्ट्वेन्द्रियविकारो भवेद्दैवपदं ददति तदा तस्मै
अथ दृढव्रतोऽग्रे महानीलमाणिक्यावज्जपेद्यावदुदक-
मुत्तीर्य वासाꣳसि परिधाय यावन्ति दिव्यैः सुगन्धि-
चन्दनैरङ्गानि विलेपयन्ति पाणौ गृहीत्वा विमाने स-
मारोपयन्ति तासाꣳ सर्वाधिपतिर्भवति ताभिः सह
लोकं गच्छति यं भोगं कामयते तं कुरुते मध्यन्दि-
ने चादुर्गतिलैर्यवधान्यापामार्गहोमः सोऽर्घप्रदाना-
य देवकन्यां पश्यति कन्याऽऽवेत्यर्घं दद्यादनेनैव विधि-
ना महाव्याहृतिवत्कर्म प्रतिदिवसमित्याज्याहुति-
सहस्रं जुहुयात्प्राचीमनुप्रदिशमित्याज्यसहस्रं जु-
हुयाद्द्विपदश्चतुष्पदः कामोऽन्नसहस्राच्चेति सहस्रना-
म्ना पृथग्युक्तानि कर्माणि भवन्ति ॥ २ ॥ ताꣳ सविद्विति
सहस्रधारया गोमयꣳ सहस्राभिमन्त्रितं कृत्वा संलि-
प्तगरोस्त्वाग्निद्युम्नामस्य गावो न क्षीयन्ते दुग्धमा-
नायास्तस्या नाम गृहीत्वा परिवेषणं कृत्वोदकवती-
र्यं तावज्जपेद्यावन्मुक्तो धेनुं लभते शमीसमिधो जुहुया-
दृषभादिकꣳ शतँल्लभतेऽश्व वा गोशफेनाज्यं जुहुया-

द्गोशतं लभेदेतेनैव हस्त्यश्वमहिषाजाविका व्याख्या-
ताः घृतदुग्धाहुतीनां शालीन स्रुवेणाष्टसहस्रं जुहुया-
छोताग्नेर्दुग्धनाह्निषीर्लभेत विधेमतऽइति वैकङ्कतीभिः
समित्सहस्रः स्यादग्निरिति दध्यौदुम्बरीभिस्समिद्भिर्दध्य-
क्तमयुतं जुहुयाद्गृहेऽन्नमक्षय्यं भवति ॥ ३ ॥ सप्ततऽ-
इत्याहुतिसहस्रेण तेजस्वी भवत्युदुम्बरापामार्गति-
लतण्डुलैः सप्तदशसहस्राणि जुहुयात्सप्तसुवर्णं लभे-
त्सर्वं शान्तिको या स्रुक् सकृदुदुम्बरपाणिना पूर्णाहुति-
होमेन यं लभते सहावाते शुक्रज्योतिरिति सप्त-
वारं जपेच्छान्तिर्भवति इन्द्रं दैवीरिति कातिकल्पिका-
नाम् सुभिवज्ञ्नाक्तानां घृतपूर्णानाम् चतुष्पथे-
षु ग्रामवने.ऽग्निमुपसमाधाय शतसहस्रं जुहुयात्सर्वा-
लङ्कारभूषितां एव कन्यां लभते ॥ ४ ॥ इमम् स्तनमि-
ति मधुरां मधोर्ग शोदकसर्वगीयायुतं जप्त्वाऽष्टसह-
स्रं जुहुयाद्ग्रामं लभते घृतधारयाऽर्कपुष्पाणि वा सुप्र-
सिद्ध यायुतं जुहुयादुदुम्बरपलाशां सवत्सां गां लभ-
ते जपेदेनं लभते घृतं भिषिञ्च इत्यष्टाभिराज्या-
हुतिसहस्रं जुहुयादप्सु प्रविश्य जाड्यमयं न भवति
वाजश्चेति सप्तभिः पावमानैराज्यं जुहुयादप्सु जपेद-
क्षिरोगा नश्यति पशुनामस्यैवं ब्रीहयश्चेति सर्वब्रीही-
न्पयसा शतसहस्रं जुहुयाद्ग्राम्यब्रीह्योऽक्षय्या भव-

न्ति च पुष्णाति ॥ ५ ॥ विश्वेऽअद्येति महाव्याहृ-
तिवत्कर्म राजो न ऽइति त्रिभिर्नीहीञ्जुहुयादयाचिते-
न धनमाप्नोति मम्मेति पयोदधिमधुघृतमिश्रान्सर्व-
व्रीहीञ्जुहुयाद्वर्षति ॥ ६ ॥ ऋताषाडिति षड्भ्चेना-
ज्याहुतिसहस्रं जुहुयाद्वर्षति स नो भुवनस्येति गृह-
वास्तुभ्यऽआज्याहुतिसहस्रं जुहुयाद्वास्तुदोषैर्न लिप्य-
ते यास्तऽइति सौभाग्यकामो जपेद्दशपरो हसकिङ्किः
पुत्रकामो दिवो मूर्द्धेति महाव्याहृतिवत्कर्म मूर्द्धन्वि-
त्यादहोरात्रं प्रविश्य जपेदहोरात्रं वर्षतोदर्ढ० हविष्-
त्यात्मनस्त्वोजोबलहद्रे पयसा होमऽइन्द्रियविकलो ज-
पेत्पूर्णेन्द्रियो दीर्घायुः प्रजावाँश्च स्यादग्नऽआयूंषी-
त्याज्यं हुत्वा मातृगृहे प्रविश्य जपेन्मित्रमिवोपचर्यते-
ऽग्निनेनेति जपकामो लाजाञ्जुहुयादाज्यं वा यो
भूतानां चातारमिति च महाव्याहृतिवत्कर्म मही-
मूषु दचेन नावमारोहेत्क्षेमेण तरति ॥ ७ ॥ हि-
रण्यपाणिमूतय ऽइत्यर्कसमिद्भिरयुतं जुहुयात्सुवर्णमु-
त्पद्यतेऽजीजनऽइति रहस्यो मन्त्रऽएतेन नागा वश-
मुपयान्ति लौहं त्रिशूलर्ढ० सहस्राभिमन्त्रितं कृत्वा
दक्षिणपादेनाक्रम्य पयोदधिमधुघृतैरयुतं हुत्वा विकृ-
तरूपास्त्रियऽउत्तिष्ठन्ति किमस्माभिः कर्तव्यमिति ब्रु-
वन्त्योऽभिरुचिकामेन ताऽआज्ञापयेत्नमोऽस्तु सर्पेभ्य-

ऽइति तिसृभिरर्घं दद्यादग्न्यागारे गोमयलिङ्गं प्रति-
ष्ठाप्य पञ्चगव्येन संस्नाप्य दक्षिणतः शूलं निखनेत्पु-
नः सहस्रं जपेत्सुवर्णशतँल्लभेतमिदं कर्मेत्याचक्षते ष्ट-
ष्टौ शिखण्डानतसीपुष्पाणि वा युञ्जीतेति महाभये
जपेदभयं भवति सर्वकर्मसु मध्ये कृच्छ्रेण गायत्र्या शत-
सहस्रं जपेत्पूर्वमेवैतत् ॥ ८ ॥ गणानां त्वेत्यौदुम्बर-
तिलयवापामार्गधान्यादिहोमार्थप्रदक्षतुष्पथे वैरहणी-
करणे पिचुमन्दपत्रैर्हुत्वा त्र्यम्बकप्रतिकृतिं वल्मीकस्थ-
दा कृत्वाऽर्च्चयेन्मार्ठ॰समाषोदनमपूपतिलपिष्टकपरः
मान्नफलपुष्पादिभिर्बलिमुपहरेदक्रतुगृह्यैतानि क-
र्माणि भवन्ति सर्वसङ्घः स्याद्गायत्री त्रिष्टुबिति पञ्च-
भिः शङ्खेनाज्याहुतिसहस्रं होमात्सिद्धिः ॥ महाना-
म्न्यऽइति खादिरस्रुचा तिलतैलं निष्कृष्याऽष्टसह-
स्रं जुहुयाद्बन्धबन्धान्मुच्यते वैकङ्कतकाष्ठकटुतैल-
विषरुधिराक्तानां द्विगुणं शतसहस्रं हुत्वा सगणं॰
राजानमुत्सादयति ॥ ९ ॥ अथ वशीकर्तुमिच्छञ्छिखां
परिजप्य बिल्वकाष्ठकान्हुत्वा राज्ञो मन्त्रभेदं जनये-
त्सर्वत्र मध्यमकृच्छ्रो गायत्र्या लक्षं वेन्द्रस्य क्रोडऽइत्यु-
दरमभिमन्त्र्य रात्रौ स्वपेदुदरविकारो न स्याद्धृ-
तिमित्याज्याष्टसहस्रं भूमिलाभाय जुहुयाज्जुम्ब-
कायेति वरुणाकृदपोमन्त्रोऽश्वमेधावभृथेष्टौ ब्रह्मह-

हुत्वा सुभगः स्यात्कन्यादानसमये१००००जपेद्यावज्जीवं सौभाग्यं भवत्यऽमुत्रभूयादित्यायुः कामो दूर्वानभिघ्नस्तु षाङ्जुहुयात् ॥ २ ॥ ऊर्ध्वाऽअस्येति वैकङ्कताभिः शत्रुभयं नश्यति जातीकण्टकैर्वचनविधेयश्च तनूनपादसुरऽइति न्यग्रोधमूलेऽग्निमुपसमाधायाशोकपुष्पाणां घृताक्तानाऽशतसहस्रं हुत्वाऽसुरकन्यां पश्यति दृष्ट्वाऽनुवाकशेषे न दद्यादग्निमुखे दिव्यटं०सुवर्णं प्रयच्छति नचेत्तूष्णीमनुगच्छेद्यान्निवर्तते बिलप्रवेशनकाले पाणौ गृहीत्वा प्रविशति चिराञ्चोषितस्तत्स्वामी भवति राये न्वित्यनुवाकशेषं निवाते जपेद्वातो वात्येकया च तिसृभिर्घृतं जुहुयाद्वातरोगान्मुच्यते ॥ ३ ॥ अभित्वेत्यहोरात्रं जपेद्दर्पति कया नऽइति माषोदनं तिलमिश्राणामन्नानां त्रिकटुकेनाभ्यज्य चतुष्पथे शून्यायतनेऽग्निमुपसमाधाय शतसहस्रं जुहुयाद्धोमान्ते चित्राङ्गदो विद्याधरराजो दिव्यटं०सुवर्णराशिं ददाति ॥ ४ ॥ ऊर्जोनपातमिति दधिमधुघृतैरापद्भ्यो मुच्यते ॥ संवत्सरोऽसीत्याज्यमष्टसहस्रं हुत्वा यावज्जीवमारोग्यं स्यात्प्रेत्याऽइति मधुतिलाक्तशतसहस्रं जुहुयात्सुवर्णमुत्पद्यते न च कश्चिदभिहर्ता भवति ॥ ५ ॥ केतुं कृण्वन्नित्यनुवाकेन रथं शस्त्रमायुधमात्मानं चाभिमन्त्र्य सङ्ग्रामे प्रविश्य जपेज्जयो भ-

वर्ति धन्वनागेति धनुर्वेदमन्त्र: स्वाध्यायाद्यावद्रणदी-
क्षित: क्षत्रियो भवति सा च दीक्षा त्रिविधा गोब्रा-
ह्मणादेवस्वाम्यात्मनां क्षितायेत्यात्मानं सन्नह्यतऽइ-
ति मर्माणिक्षितऽइति कवचं परिधत्ते धन्वनेति धनुर्यो-
जयेत्ते ऽभ्याचरन्ती इतिविस्फुरणं वक्ष्यन्ती वेदिति
ज्याभिमर्शनमहिरिवेति हस्तवेष्टनमभिमन्त्रयते ब-
ह्वीनां पितेति तूणं कलापमभिमन्त्र्य परिधत्ते सुपर्णमि-
ति नैर्ऋत्यां दिश्येकमिषुं क्षिपेदप ऽउपस्पृश्य वनस्पते
वीड्वङ्गऽइति रथमालभ्य युञ्जन्तीत्यश्वयोजनमसि यम-
ऽइतिवत्सममाघ्रु: शिग्रानऽइत्यनुवाकेनालभ्य विष्णो:
क्रमऽइत्याक्रम्याजङ्घन्तीत्यश्वताडनमक्रान्ददित्युत्सर्जमा-
ने जपेद्या: सेनाऽइति परसैन्याभिमुखं० रथं
वाहयेद्रथे तिष्ठन्नित्यवस्थापयेत्सदुन्दुभऽइति दुन्दुभि-
स्ताडनमहिरिवेतीषुं गृह्णाति यत्र बाणाऽइति दिक्षु
नयेयुरक्रान्दऽइतिरथं वाहयेत्तदेवमाविद्धाविध्य श-
स्त्राणां चालनमेव युध्यमानेऽपराजितो भवति शक्रे-
णापि युध्येत् ॥ ६ ॥ वृषेन दत्तमित्यश्वानभिमन्त्रयेत्क्रा-
न्तान्पुनस्त्वोशितऽइत्यश्वग्रन्थीन्मोचयेन्महाँ २ऽ ॥ इन्द्रऽ-
इत्यासनमिन्द्रो वृत्रमिति रथं कुतस्त्वमिति योधात्सह-
सामभिभाषयेत्तान्प्रतिजपेत्सुसमिद्धायेत्याहवनीये स-
मित्रमादधाति न तद्रक्षाꣳसीत्याज्याहुतीनामयुतं जु-

हुयात्क्षत्रियाणां च नवनाशाय गतायुरपि दीर्घायुर्भवति
शं नो देवीरित्युपस्थाय प्रविशेद्देया रणादीनां ब्राह्म-
णोऽपि प्राणसꣳशये क्षत्त्रादाददीत यमेन दत्तमित्यश्वं
सकृदाज्याहुतीनामयुतं जुहुयाच्चतुरश्वयुक्तꣳ रथं
लभतेऽसियमऽइति मधुतिलाञ्जुहुयाद्देवमनुलेपना-
दिभिरर्चयेद्दृढपापो भवति ब्रह्मघ्नमपि लक्षहोमेन
तारयेत्समिद्धोऽअद्येति होमकाले देवतानामाह्वान-
मग्नये गायत्र्यायेति सार्वकामिकं चरुं कुर्यात् ॥ ७ ॥
विश्वानि देवेति महाव्याहृतिवदादित्यमुदयऽउपति-
ष्ठेद्विपापो भवत्युदकसक्त्वाहारो मासमेकमन्वहꣳ स-
हस्रं जपेद्ब्रह्महत्यादेरपि मुच्यते विभक्तारमिति सप्त-
म्यां कुशपुष्पाणां कृत्वौदुम्बरसमिधो यावच्छुष्यति रा-
वत्पुष्पारायार्द्रकेशस्य साहस्रिकं कर्म महानर्घो जायते
गोशफेन त्र्याहुतिहोमो गोकामाय मध्याह्नान्न-
पिण्डं तद्रक्षाभिमन्त्रितं निवेश्येद्दिव्यमन्नं खादने बुभु-
क्षित आदित्याभिमुखो जपेत्सर्वतो भोजनं लभते ॥ ८ ॥
सहस्रशीर्षेति महाव्याहृतिवद्दिवाहमित्यासु प्रविश्या-
होरात्रं जपेदामध्याह्नाद्वर्षति यो देवेभ्यऽइति रु-
चमिति रोचनाऽन्या महाव्याहृतिवच्छ्रीश्चेति कुमुद-
सौगन्धिकोत्पलान्युष्य हुत्वा श्रीमान्भवत्युत्तरनाराय-
णेनादित्योपस्थानं कामं नामग्रहणं च यथेष्टं कामꣳ

सर्वत्र सिद्धं कर्म सदसस्पतिमिति चन्द्रग्रहे निराहारो
वचां ब्राह्मीं वा सहस्राभिमन्त्रितां पिबेत्परमसेधावी
स्यात्त्वांमेधामिति जपेदिदं मऽइति च श्रीकामो नि
त्यम् ॥ ९ ॥ अस्याजरासऽइत्यग्निमुपतिष्ठेद्वरदो भ
वति तेजस्वीच द्वयोर्महाव्याहृतिवत् त्रीणि शताऽग्ने
शर्द्धेति त्रिमधुरैः सौभाग्यं प्रवो मन्देऽइति भूमिका
मक्षिततण्डुलैरिन्द्रो वृत्रमित्यत्र पुष्ट्याऽआयुषऽआ
श्यमाञ्जनऽइत्यौदुम्बरीभिर्द्धनकामो विभ्राडित्यनुवा
कं सततं जपेत्स्नाकामस्तेजस्वी निरुजस्थानऽइडा
भिरित्यौदुम्बरीभिः पशुकामो यद्धेति वासकादि
भिर्वशीकरणं तिलकेन तच्चक्षुरिति चक्षुष्मान्भवति
परामश्चानिति महाव्याहृतिवच्छायन्ऽइवेति तिला
न्पुष्पाणि वा हुत्वा वास्तुपे शतपुष्पीं वा सुभगः स्या
त् ॥ १० ॥ आकृष्णेनेति महाव्याहृतिवत्कर्म करवी
रपुष्पाणि १००००० हुत्वा तप्त सुवर्णं लभेदग्नि इन्द्र
श्चेन्द्रवायूऽइन्द्राग्नी मित्रावरुणेति देवताह्वानं सिद्ध
येऽग्नऽइन्द्राग्नी रुद्राऽइति वारुण्यां गच्छेत्क्षेमं भवत्य
वीमुऽइति घृतेन सर्वभयनाशनं मित्रस्य हुत्वऽइति
घृतं हुत्वा शिष्टं पिबन्मेधावी स्याद्दद्भिरिति
लाजाभिर्हिरण्यं गावऽउपति दधिमधुघृतैः पशुपुत्र
सम्पत्तिकामऽउपनोऽनुत्तमेति चेमाऽउत्वेति पावका-

य प्रतिकर्मीत्याजरासऽइत्यध्यायेन सर्वदेवताराधनं कुर्यात्प्रतिदिनं काममेकैकं लभतेऽध्ययनेन मासात् ॥ ११ ॥ यज्जाग्रतः षड्भिः शिवसङ्कल्पेन मानससमाधिः पितुन्विति मधुनामग्नाष्टाभिचाराणि जुहुयात्कर्म षट्कं सिद्ध्यन्निमयते पञ्च नद्यऽइति पद्मपुष्पाणि रक्तचन्दनघृताक्तानि लक्षं हुत्वा साक्षात्पद्ममालिनीं पश्यति यावज्जीवं धनं प्रयच्छतीष्टसमृद्धिं च सिनीवालीति प्रजाकामोऽन्नं जुहुयात्अन्वदित्य,युश्च वटारोहौदुम्बरदूर्वाश्च त्वन्नऽइति पुनपशुरक्षार्थमाज्यं जुहुयादुत,नाम वेति सद्योजातमात्रवत्सावलीढाभ्यां वा जिह्वां उपस्पृशेद्गावऽश्नत्थ्या भवन्ति । इडायास्त्वेति गोशफेनाज्याहुतिसहस्रं जुहुयात्धेनुशतंल्लभते । त्वमग्ने प्रथमऽइति नित्यमग्निं स्तुयात्सर्वसम्पन्नो भवति प्रवो मह ऽइति षडृचेन पितृनर्चयेत्प्रजाकामऽआहुतिसहस्रं जुहुयात्गोशतं लभते देवेनेति यज्ञमिच्छेत्तावन्ति सर्वौषधीर्जुहुयात्प्रभुत्वं लभते सोमो धेनुमिति सोमचन्द्रग्रहेऽनुदितमुपतिष्ठेत्तन्मासे क्षेममौदुम्बरीभिर्हुत्वा हिरण्यप्राप्तिः स्यादष्टौ वीति महाव्याहृति वहिरण्यपाणिरिति चाभिचारवर्ज्जमादित्योपस्थानं॰ हिरण्यहस्तऽइति सर्षपानभिमन्त्र्य रक्षार्थो भवति

ये ते पन्थाः क्षेमेण गच्छति क्षेमकारिण्युभा पिबतमि-
ति रूपकामोऽश्विनौ स्तुयादुषस्तदिति प्रातर्दिवा
स्वस्त्ययनमनाद्यं च पुत्रार्थी द्रव्यहोमस्तदर्थं महाव्याहृ-
तिवत्प्रातर्जितमिति च यदा बध्नन्ति हिरण्यठं॰ स-
हस्राभिमन्त्रितं दक्षिणहस्ते बध्नीयात्सर्वेषां पापचक्षुषां
दृष्टिदोषमपोहति न च राजाविरुद्धमाचरेत्प्रियदर्शनो
भवति ॥ १२ ॥ इति यजुर्विधाने पञ्चमोऽध्यायः ॥ ५ ॥
परं मृत्यविति बालानां गुर्विणीनाञ्च हस्ते सूत्रबन्धो भू-
तप्रेतादि नाशयति जपहोमौ च प्रौढगर्भे गर्भस्रावे
बन्ध्यात्वे च मृतवत्सामृतौ माठंसपललापूपजाङ्गलि-
कारण्यतांसपयोदधिमधुघृताक्तमन्नं निवेद्य सर्वका-
मिकमन्नठं॰ भुक्त्वा शेषमुग्जपत्वा मैथुनमुपेयाद्गर्भ-
स्तिष्ठति प्रथमे पतिते आवाहनं द्वितीये पोषणं तृ-
तीये तर्पणं पञ्चमे गर्भस्तिष्ठेदमोघं कर्मापाघमित्य-
पामार्गहोमः सर्वदुरितदुःस्वप्ननाशनऽआयुष्मानित्या-
ज्यमायुषे रक्षायाऽइमं जीवेभ्यऽइति सीतालोष्ट-
ठं॰ सहस्राभिमन्त्रितं चतुर्दिक्षु क्षिपेद्दुष्टभयं न
स्यात्परीमऽइति शिखाबन्धो मंडलबन्धश्चात्मरक्षार्थीय
वशीकरणे तुषहोमो महाभये जपेदभयं भवति रा-
जानमीक्ष्य जपेद्वश्यो भवति हन्तुमागच्छन्तं दृष्ट्वा ज-
पेत्प्रणमति भक्ष्यपुष्पफलादीनि दद्याद्वश्यार्थे च स्योना

पृथिवीति महाव्याहृतिवत्कर्म्म ॥ १ ॥ ऋचं वाचमि-
तीन्द्रियविकलो जपेत्पूर्णेन्द्रियो भवति यन्म इति-
कर्मसमाप्तौ दोषपरिहारार्थञ्जपेत् इन्द्रो विश्वस्येति
द्विपदश्चतुष्पदां शान्तिः क्षीरहोमाच्छान्तिर्भवति शन्नो
मित्र इति जनमरणे चोपसर्गाभिचारेषु ज्वरादिरो-
गे स्वाध्यायसमाप्तौ व्रीहिहोमः शान्त्ये विषमग्रहे त
त्समिद्धोमः द्यौः शान्तिरित्यभिचारवर्ज्जं सर्वकर्मसि-
द्धिर्यतो यत इति जपेद्भयकारिणीषु सुमित्रिया
न इति जलमञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं प्रति-
निक्षिपेत्तमुत्सादयति तच्चक्षुरिति जपेदारोग्याय
पुष्ट्यै ॥ १२ ॥ यमाय त्वा जपेदन्वहं सर्वसङ्घो
विदितश्च स्यात् ॥ २ ॥ अनाधृष्टेति पञ्चचतुर्भिः
पयोदधिघृतमधुतिलैर्जुहुयादृणासङ्ख्यमायुः प्रजापु-
ष्टिधनतेजस्कामो विश्व इति निमित्ते जपेद्धर्त्ता दिव
इति बुद्धिभ्रंशनाशनी हृदे त्वेति मतो ग्लानौ क
र्मसमृद्धिः पिता न इतिमहाव्याहृतिवत् ॥ ३ ॥ इड
एहीति यामेव धेनुमिच्छेत्तस्या नाम परिजप्य गोस्वा-
मीति शब्दं वदेत्तस्यैवापतति गोमयेन गोः प्रति-
कृतिं कृत्वा तन्नाम्ना बध्वा सव्येन गृहीत्वा पयोद-
धिमधुघृतं जुहुयात्तामेव धेनुं लभते यस्ते स्तन इति
सर्वकर्माणि सिद्ध्यन्ति स्वाहा सूर्यस्येति दृष्टिकामः

पयो जुहुयात्सद्यो वर्षति समुद्रायेति वातनामानि
जपेद्वातो वाति दिविधाऽइति दधिसहस्रं हुत्वा-
सविता प्रसीदति ब्रीह्यादिभिः पुष्टिर्गौरगौर्ष्टिर्वे-
तसगुडक्षीरैस्तैलाक्ताभिः सहस्रं जुहुयात्स्वाहा
रुद्रायेति रहस्यो मन्त्रः गवेधुकतण्डुलान्जुहुयाद्धन-
कामः ॥ ४ ॥ स्वाहा प्राणेभ्यऽइति महाव्याहृतिव-
त्कर्म तं ग्रामे कुर्यान्मनसः काममिति श्रीनाम्ना सर्वा-
भ्युदयसिद्धः फलति गोघृतेनाज्यहो १००० मेन गो-
लाभो गोमयहोमेन सिद्धिकग्रस्येति विष्णुखाख्यो मन्त्रः
सर्वकामप्रदो गोपशुमन्त्रो गोष्टे वैकङ्क १०००० कती-
र्हुत्वा शान्तिः कर्गंलोहितेनेत्येकादशचतुर्भिर्द्रव्यका-
मवर्ज्जं महाव्याहृतिवत्प्रतिदिनमेकादशसहस्रप्रतिम-
न्त्रं निर्वपेदेकादशैव धेनवऽउत्पद्यन्तऽएवमन्येष्वपि
कामेषु हुत्वाऽध्यायशेषेणादित्यमुपतिष्ठेरेनास्य क-
र्मणां फलमाप्नोत्यग्नेनयेति नमस्कारोक्तिरग्निस्तुति-
रात्मनो वा कर्मसमाप्तौ समाप्तौ च हिरण्मयेनादि-
त्योपस्थानमोमित्येकाक्षरस्य परब्रह्मणो नामधेयं वेदा-
रम्भे समाप्तौ च जपहोमादिषु शान्तिपुष्टिकर्म चै-
तत्प्रयुज्यतऽएतद्विदित्वा सर्वविद्भवत्येतदुपास्य रवि-
सिद्धिभाग्भवति कल्याणतरो भवत्येतत्कर्मफलप्रति-
पादकं पूर्वकर्मफलाभावाद्भावकृतस्य कर्मणः स वेद-

फलंयुक्तस्य कर्मणो नास्ति नैष फलमिति तच्छ्रुत्यपे-
क्षया ऽमुष्मिंल्लोके कृतस्य कर्मणः फलं ऽ० हि संप-
त्तिः प्रत्ययं च न च विद्याधरपादप्रसारितधनानां अ
न्यपूर्वसर्वरसेषु नास्ति यज्ञविरोधित्वादित्यनेनैव प्रका-
रेण सर्वे मन्त्राः प्रकीर्तिता ये नोक्तास्ते च सर्वे यथा-
स्कारा ऽथवा सर्वमन्त्राणां विस्तरेण पृथग्विधानं
विस्तरेण पृथग्विधानमिति ॥ ५ ॥ इति श्रीयजुर्वेद-
वाजसनेयसंहितायजुर्विधाने षष्ठोऽध्यायः ॥ ६ ॥ स
माप्तोऽयम् ॥

# अथ स्वराष्टकशिक्षा ॥

ओं हरिः ॥ ओम् साम्ब ॥ अऽइऽउऽऋऽऌऽएऽऐऽओऽऔ-
ऽइत्यष्टौ स्वराः ॥ पदान्तपदाद्योः सन्धिः ॥ पदान्तप-
दाद्योर्य्यऽएकः प्राणयोगः स सन्धिसञ्ज्ञः स्यात् ॥ न प-
रकालः पूर्व्वकाले ॥ पुनः पूर्वकालसन्धिः विधाने पर-
कालसन्धिं न प्राप्नोति ॥ एकम् ॥ १ ॥ अऽआमपरे ॥
तव अयम् ॥ तवायम् ॥ २ ॥ एकारमिवर्णे ॥ त-
व इदम् ॥ तवेदम् ॥ ३ ॥ ओकारमुवर्णे ॥ तवऽउक-
स्वोकः । ४ ॥ षाऽअऋकारे ॥ स्वाहाऽऋषभम् ॥
स्वाहऽऋषभम् ॥ ५ ॥ ऐकारमे ऐपरत्वे ॥ तवऽएत-
त् ॥ तवैतत् ॥ तवऽऐश्वर्य्यम् ॥ तवैश्वर्य्यम् ॥ ६ ॥
औकारमोऽऔपरत्वे ॥ तवऽओजः ॥ तवौजः ॥ प्रऽ
औक्षन् ॥ प्रौक्षन् ॥ ७ ॥ इर्य्यं स्वरे ॥ वाजीऽअ-
र्व्वन् ॥ वाज्यर्वन् ॥ विऽऊर्णुषे ॥ व्यूर्णुषे ॥ अ-
सिऽऋतस्य ॥ अस्यृतस्य ॥ ८ ॥ इरिमिवर्णे ॥ विऽइत ॥
वीत ॥ ९ ॥ उर्व्वं स्वरे ॥ नुऽइन्द्र ॥ न्विन्द्र ॥ १० ॥
उरुमुवर्णे ॥ अनुऽउत् ॥ अनूत् ॥ ११ ॥ ऋकारो रे
फं स्वरे ॥ धातृऽअंशः ॥ धात्रंशः ॥ १२ ॥

ऋवर्णे ऽऋकारऋवर्णे ॥ होतृऽऋकारः ॥ होतृकारः ॥ १३ ॥ एकारोऽयवं स्वरे ॥ ॥ अग्ने ऽआयाहि ॥ अग्नऽआयाहि ॥ १४ ॥ ओकारो ऽववं स्वरे ॥ विष्णोऽएते ॥ विष्णवेते ॥ १५ ॥ ऐरायवं स्वरे ॥ भूम्यै ऽआवन् ॥ भूम्याऽआवन् ॥ १६ ॥ औरावं स्वरे । उभौऽइन्द्रौ ॥ उभाविन्द्रौ ॥ १७ ॥ ओपराकारा लोपम् ॥ अदृश्यायोऽअग्नीतम ॥ अदृश्याय ऽगीतम ॥ १८ ॥ तत्राद्यलक्षणम् ॥ एपराकारो लोपम् ॥ तेऽअवन्तु ॥ तेवन्तु ॥ १९ ॥ वो लोपस्तुऽओऔषु । उभौऽउ ॥ उभाऽउ ॥ उऽओऽऔष्विति किम् ॥ पत्न्यावक्षोरान्वे । २ । इत्यनन्ताकृताच्सन्धिः ॥ अथ स्वरप्रकरणम् ॥ उदात्तानुदात्तस्वरितप्रचयाः स्वराः ॥ १ ॥ अताम्न उदात्तः ॥ २ ॥ यथा ॥ शम् ॥ प्र ॥ नु ॥ द्वितीयस्य यथा ॥ अधो रक्तोऽनुदात्तः ॥ वद्रऽईडे ॥ ३ ॥ तृतीयस्य च यथा ॥ उपरि रक्तस्तिर्य्यग्रक्तो वा स्वरितः ॥ स्वः ॥ स्वः ॥ स्वः ॥ ४ ॥ न्युब्जपराऽअताम्नाऽउदात्ताः ॥ स्वाहा ॥ स्वर्णार्कः ॥ ५ ॥ चतुर्थस्य च यथा ॥ स्वरितपराऽअताम्नः प्रचयाः । त्र्यम्बकँयजामहे । ६ । स्वरितः पञ्चधा ॥ जात्याभिनिहितक्षैप्रप्रश्लिष्टभेदात् ॥ एकपदे नीचपूर्व्वऽपूर्व्वो वा यवा-

न्यतरयुक्तो जात्यः ॥ धान्यम् । स्वः ॥ ७ ॥ उदात्ताद्व-
योरचोऽभिनिहितस्वरितो भवत्यकारलोपे सति ॥ ते-
ऽवन्तु । तेवन्तु ॥ वेदः असि ॥ वेदोसि ॥ ८ ॥ उदात्त-
ऽऽउस्थाने यवयोः परोऽनुदात्तः क्षैप्रः ॥ द्युयोध्यस्म-
त् ॥ नुऽइन्द्र ॥ न्विन्द्र ॥ ९ ॥ उदात्तानुदात्तयोर्ह्रस्व-
योः स्थानेऽइकारः प्रश्लिष्टः ॥ विऽइत ॥ वीत ॥ १० ॥
अनुदात्तपूर्वजात्यादयश्चत्वारः पिटदानवद्वत्ताम् ॥
वायवस्थैऽः ॥ भुवः स्वः । तेऽवन्तु ॥ वेदोऽसि ॥ अ-
स्यभि ॥ योजान्विन्द्र ॥ दिवीव ॥ ११ ॥ अनुदात्तपू-
र्वजात्यादयश्चत्वारो मनुष्यदानवद्दात्त ॥ भूर्भु-
वः स्वर्द्यौः ॥ सहन्यमिति ॥ रुद्रेभ्यो येन्तरिक्षे ॥ स्व-
पोस्यूर्णम् ॥ युयोध्यस्मत् ॥ आरवन्तः ॥ दिवीवेति ॥ १२ ॥
अनुदात्तऽउदात्तस्वरितयोः ॥ येभि ॥ स्वर्गा येऽभि ॥ सोऽ-
हम् । यद्वन्तरिक्षम् । वीदम् ॥ स्वस्तभितम् स्तभितम्
स्वः स्वस्तभितम् ॥ १३ ॥ अननुदात्तपूर्वजात्यादयश्चत्वा-
रः कर्मामूले ऽउदात्तस्वरितपरत्वाऽभावे ॥ न्यङ् ॥ स्वः ॥
तेऽवन्तु ॥ सोऽसि ॥ त्र्यम्बकम् ॥ न्विन्द्र ॥ वीत ॥
१४ ॥ उदात्तात्परानुदात्तः स्वरितम् ॥ इषे त्वा ॥
१५ ॥ नोदात्तस्वरितपरत्वे ॥ इषे त्वोर्ज्जे ॥ ईशा वा-
स्यम् ॥ स्वरितादनुदात्तानां प्रचयः ॥ वायवस्थ ॥ १६ ॥

नोदात्तस्वरितपरत्वे ॥ आयवस्थ देवः ॥ आय्यमिद-
म् ॥ १७ ॥ उदात्तवानेको ह्युदात्तः ॥ प्रऽअर्पयतु ॥
प्रार्पयतु ॥ १८ ॥ उदात्तान्निहितस्वारः स्वरितात्प्र-
चयो भवेत् ॥ उदात्तात्स्वरितात्पूर्वो नान्यः प्रचयी-
स्वरः । इति स्वराङ्कुशः ॥ कुचैलिनं दन्तमलापधा-
रिणम्बह्वाशनन्निष्ठुरवाक्यभाषिणम् ॥ सूर्योदये चा-
स्तमये च शायिनञ्जहाति लक्ष्मीरपि चक्रधारिणम् ॥
अथ हस्तप्रचेपलक्षणम् ॥ अनुदात्तो हृदि ज्ञे-
यो मूर्ध्न्युदात्तऽउदाहृतः ॥ स्वरितः कर्णमूले स्या-
न्नासाग्रे प्रचयस्मृतः ॥ ३ ॥ इषे त्वा ॥ आयव स्थ ॥
उदात्तादनुदात्तं तु यामायां भुवऽ आरभेत् ॥ इषे
त्वोर्जे ॥ उदात्तात्स्वरिते चैव क्रमाद्दक्षिणतो न्यसे-
त् ॥ ४ ॥ इषे त्वा ॥ इत्यनन्तकृतं स्वराष्टकम् ॥ २ ॥
कटपा गडदबानधि ॥ ऊर्क् ॥ असि ॥ ऊर्गसि ॥
सम्राट् असि ॥ सम्राड्डसि ॥ उत्वयम् ॥ उद्वयम् ॥
त्रिष्टुप् इति ॥ त्रिष्टुबिति ॥ १ ॥ कटतपा ङणनमाः प-
ञ्चमे । वाक्मनः ॥ वाङ्मनः ॥ षट्महान् ॥ षण्म-
हान् ॥ तत् मित्रस्य ॥ तन्मित्रस्य ॥ अनुष्टुम्मात्या ॥
१ ॥ तदजाश्च जशाः प्रचवर्गयोः ॥ तत् चित्रम् ॥ त-
च्चित्रम् ॥ तत् जुषस्व ॥ तज्जुषस्व ॥ आदित्याद्वा-

ष्टुभिः ॥ आदित्या अश्मन्ष्टुभिः ॥ ३ ॥ तौ लँल्लि ॥
परिचित् । लोकम् ॥ परिचिल्लोकम् ॥ ४ ॥ अनुनासि-
कलँल्लि ॥ तान् लोकान् ॥ ताँल्लोकान् ॥ ५ ॥ ह्रस्वपर-
ङणौ द्विर्भावꣳ स्वरे ॥ दध्यङ् ऋषिः ॥ दध्यङ्ङृ-
षिः ॥ अश्मन् । ऊर्जम् ॥ ६ ॥ नः शचच्छयोः पूर्वस्या-
नुनासिकम् ॥ अग्नीन् च ॥ अग्नीँश्च ॥ ७ ॥ नः स-
न्तथयोः पूर्वस्यानुनासिकम् । तान् । त्वम् । ताँस्त्वम् ॥ ८ ॥
मः परपञ्चमꣳ स्पर्शे ॥ व्रतम् चरिष्यामि । व्रतञ्चरिष्यामि ॥
अग्रामकेतेन ॥ ९ ॥ ङणौ क्टाभ्याꣳ सकारे ॥ ङणौ का-
गमतागमौ प्राप्नुतः सकारे ॥ प्राङ् सोमः ॥ प्राङ्क्सो
मः ॥ श्रीन् समुद्रान् ॥ श्रीन्त्समुद्रान् ॥ १० ॥ मोऽनु-
नासिकं यवलान्यवलेषु ॥ सम् । यौमि ॥ संय्यौमि ॥ तम्
वः ॥ तंव्वः ॥ तम् । लोकम् ॥ तँल्लोकम् ॥ ११ ॥ मः
ॠकारꣳ शषसहरेफेषु ॥ सꣳशितम् ॥ हवीꣳ-
ष्या ॥ सꣳशिशाधि ॥ सꣳसः ॥ अपाꣳ रेताꣳ-
सि ॥ १२ ॥ झयः परः शश्छः ॥ तत् । शुक्रम् ॥
तच्छुक्रम् ॥ १३ ॥ झयः परो हः चतुर्थम् ॥ भिष-
क् । होमः ॥ भिषग्घोमः ॥ तत् । हविः ॥ तद्धविः ॥
सम्राट् होमः ॥ सम्राड् ढोमः ॥ १४ ॥ स्वरपरसँ-
योगादिर्द्विः ॥ इषे त्वा ॥ इष्षेत्त्वा ॥ १५ ॥ रहाभ्यामप-

ब्यः ॥ व्वायवस्थ ॥ व्वायवस्थ ॥ १७ ॥ इत्यनन्तकृतो हलसन्धिः ॥ अपरविसर्गऽउऽअइशोः । शिवः । असि ॥ शिवोऽसि ॥ देवेभ्यः । हविः । देवेभ्यो हविः ॥ १ ॥ आपरो लोपमऽआपरत्वे । देवाःऽ । अत्र । देवाऽअत्र । देवाःऽआशाऽः ॥ देवाऽआशाऽः ॥ २ ॥ अपरो लोपमा परत्वे ॥ देवाःऽआशाऽः । देवाऽआशाऽः ॥ ३ ॥ आपरो लोपठं० हशि ॥ देवाःऽ । हसन्ति ॥ देवा हसन्ति ॥ ४ ॥ अआपरो लोपमिचि ॥ देवाःऽ । इह । देवाऽइह ॥ अघ्न्याःऽ । इन्द्राय । अघ्न्याऽइन्द्राय ॥ ५ ॥ रेफतऽइच्परस्य रेफमशि ॥ सवितःऽ जजान ॥ सवितर्जजान ॥ अग्निःऽ एकाचरेण । अग्निरेकाचरेण ॥ ६ ॥ रेफजेच्परो लोपठं० रेफे पूर्वस्य दीर्घम् ॥ प्रातःऽः रात्रिः ॥ प्राता रात्रिः ॥ रुद्रः रौद्रःऽ ॥ रुद्र रौद्रःऽ ॥ ७ ॥ स्यसऽएषविसर्गौ लोपंठंव्यञ्जने ॥ एषः स्यः । एषस्यः ॥ स्यः राध्यः ॥ स्यराध्यः ॥ सः । नऽः सन् ॥ ८ ॥ सः ते । सत्ते ॥ नमः ते ॥ नमस्ते ॥ ९ ॥ चछपरत्वे शम् ॥ व्वाजः च ॥ व्वाजश्च ॥ १० ॥ लोपङ्खर्परे शरि ॥ अन्धःऽः स्थ । अन्धस्थ ॥ ११ ॥ इतिविसर्गसन्धिः ॥ अऽइऽउण् ॥ १ ॥ ऋऌक् ॥ २ ॥

एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥ हयवरट् ॥ ५ ॥ लण् ॥ ६ ॥ ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥ घढधष् ॥ ९ ॥ जबगडदश् ॥ १० ॥ खफछठथचटतव् ॥ ११ ॥ कपय् ॥ १२ ॥ शषसर् ॥ १३ ॥ हल् ॥ १४ ॥

अउभ्रिनं परेषां संशोध्यम् ॥ इति स्वराष्टकं संपूर्णम् ॥

# क्रमकारिकाशिक्षा ॥

---

श्रीगणेशाय नमः ॥

प्रणम्याद्यं दिनमणिं योगीश्वरशिरोमणिम् । सर्वज्ञं याज्ञवल्क्यं तच्छिष्यं कात्यायनम्मुनिम् ॥ १ ॥ सर्वं याजुषमन्त्राणां वेदे वाजसनेयके । क्रमावसानविषयां कारिकामारभामहे ॥ २ ॥ श्लोके विंशादिरङ्कितः प्रतीकेषु न दुःसहः ॥ प्रत्येकम् प्रथमा षष्ठी सप्तम्युक्ताश्च कल्पते ॥ ३ ॥ पदानामानुपूर्व्येण क्रमएषः प्रवर्तते । गणान्तानां क्रमो नास्ति इति कात्यायनोऽब्रवीत् ॥ ४ ॥ न वेष्ट्याश्च द्विवेष्ट्याश्च त्रिवेष्ट्याश्च तथा परे । चतुर्वेष्ट्यो मध्यवेष्ट्यः पञ्चवेष्ट्य इतीरितः ॥ ५ ॥ अवग्रहोऽनुवाकान्ते अर्द्धर्चान्ते ऋचां तथा ॥ यजुषां वाक्यावसानेष्विति साधारणो विधिः ॥ ६ ॥ प्रत्यक्षं याज्ञवल्क्यं श्रीमन्मुनिश्चविनिर्म्मिता ॥ क्रियतां क्रमितैः कण्ठैः कारिका रत्नमालिका ॥ ७ ॥ ह्रस्वपूर्वो ह्यनुस्वारो दीर्घानुस्वारभाग्भवेत् ॥ द्विशः परश्चेन्न तथा क्रमकाले तु वाजिनाम् ॥ ८ ॥ ओ३म् ॥ इषेत्वेत्ययमध्यायो ह्यनुवाकान्तवेष्टनः ॥ गायत्रेण त्रिवेष्ट्योऽत्र पुरा क्रूरत्रिवेष्टनः ॥ ९ ॥ देव स-

वितस्थिरेद्द्व्येकमेषा ते तु द्विवेष्टनः । एतन्ते द्व्येकता
त्वग्नीषोमयोरनुवाकद्वत् ॥ १० ॥ इमन्ते द्व्यायऽएकत्व
न्देवागातुविदे द्विद्वत् ॥ सम्बद्धादिषट्कैकानुक्लिष्णो
द्विवेष्टनः ॥ ११ ॥ ततोऽसिद्ध्ये त्रिचतुष्कैकं सँव्वर्ग्गेति द्वि-
वेष्टनः ॥ यज्ञसन्त्वेत्येकतात्वेऽग्नये कव्येति न वेष्टनः ॥
१२ ॥ ये रूपद्विद्वन्नमो द्वैकमाद्यन्तोऽञ्जरूपोद्विद्वत् । स-
मिधाद्यष्टसु द्विद्वदग्निर्ज्ज्योतिः षडैकता ॥ १३ ॥ इन्द्रः
पञ्चादिवेष्ट्यः स्यात्समिदं पञ्चवेष्टनः ॥ उपप्रषट्स्वपि
द्विवत्तनूपात् सप्तकैकता ॥ १४ ॥ उपत्वा पञ्चसु द्विद्विद्-
उऽएह्यन्तवेष्टनः ॥ सोमानाद्यष्टसु द्विद्वत् परिते दूडभ-
स्त्रिद्वत् ॥ १५ ॥ भूर्भुवः स्वोनुवाकैक्यं प्रवासीति द्विवे-
ष्टनः ॥ यद्ग्रामेत्यन्तवेष्ट्यः स्यान्मो पूषेति द्वयोर्द्विवत् ॥
१६ ॥ अवभृथेत्यन्तवेष्ट्यः पूर्णाद्व्यर्ष्टसु द्विद्वत् ॥ एष-
तैका त्र्यम्बकयोर्द्वयोर्द्विद्वत्परोऽन्तद्वत् ॥ १७ ॥ वाजि-
नीत्याजौ द्विवेष्ट्यो वाजस्यस्याञ्च कैकता ॥ एदमादित्रिषु
द्विद्वन्नहीनां युगलैकता ॥ १८ ॥ आपो द्विवेष्टनः
स्वाहा यज्ञमित्यन्तवेष्टनः ॥ आकूत्यै प्रयुजे त्रिद्वद्वि-
श्वो देवस्य तु द्विद्वत् ॥ १९ ॥ ऋक्सामयोश्चतुष्कैक्यं व्रतं
कृणु सप्तैकता ॥ त्वमग्ने व्रतपाद्विद्वद्रास्वे पञ्चा-
न्तवेष्टनः ॥ २० ॥ एषा ते पञ्चकैकत्वं वस्व्यादिश्चतु-
रैकता ॥ एष ते युगलैकत्वमित्यन्ताद्विवेष्टनः ॥

२१ ॥ प्रजाभ्यस्त्वाऽन्त इन्द्रप्रथमादृचीन्तवेष्टनः ॥
समग्नेऽर्ध शुक्रान्तापससूक्तव्यादिचतुरेकता ॥ २२ ॥ प्रतिप-
न्त्यादिद्विवेष्टयः स्यादद्धित्यात्वक् द्विवेष्टनः ॥ वनेषु यु-
गयोर्द्विष्टदुक्तावेतं युगैकता ॥ २३ ॥ नमो मित्रस्य तु द्विष्ट-
द्वयणस्य त्रिष्टतरः ॥ अग्नेत्वनूर्युगैकत्वं भवतन्नो
द्वयोर्द्विष्टत् ॥ २४ ॥ आपतयेत्वेन्द्रघोषस्त्वाऽनुवाकान्तवे-
ष्टनः ॥ युञ्जतेति त्रिषु द्विष्टद्देवश्रुतयुगैकता ॥ २५ ॥ वि-
ष्णवादि त्रिषु द्विष्टद्विष्णोरराटमन्तष्टत् ॥ आददे पञ्च-
कैकत्वं यवोऽसि चतुरैकता ॥ २६ ॥ परित्वा गिर्वणो
द्विष्टदिन्द्रस्य स्यूरस्यान्तष्टत् ॥ विभूरस्यानुवाकैक्यं
ज्योतिर्विष्ट चतुष्कवान् ॥ २७ ॥ अग्ने नय द्वयोर्द्विष्टद्देव-
सवितस्तथैकता ॥ अत्यन्यानित्येकत्वमयं द्वि
त्वा द्विवेष्टनः ॥ २८ ॥ यत्तेयोरन्तष्टद्या ते त्रिषु द्विष्ट-
त्परोऽन्तष्टत् ॥ उपावीरस्य मनस्ते यत्ते त्वेत्यनुवाकष्ट-
त् ॥ २९ ॥ समुद्रादिचतुष्कैक्यमिदमापो द्वयोर्द्विष्टत् ॥
अग्नेर्वस्तन्नवेष्टः स्यादमुष्यास्तु द्विवेष्टनः ॥ ३० ॥ हृदे
त्वा युगलैकत्वं हृष्टोत्वमिन्नर्द्विवेष्टनः ॥ देवीराप-
स्तथैकत्वं यमग्ने पृत्स्विति द्विष्टत् ॥ ३१ ॥ आददे सप्त-
कैकत्वं त्वमङ्गेति त्रिवेष्टनः ॥ वाचस्त्वैक्यं चोपयाम द्वैक्य-
मावाग्रो च द्विष्टत् ॥ ३२ ॥ इन्द्रवायू अयं वां च राया
यावां त्रिवेष्टनः । तम्प्रत्नात्धद्वयोर्द्विष्टस्तन्तशुक्रैषतेऽन्त-

ष्टत् ॥ ३३ ॥ अच्छिन्नस्य चतुर्षु द्विष्टद्यं वेनस्त्वमध्यमः ॥
एष तेऽत्यन्तवेष्ट्यः स्याद्ये देवासो द्विवेष्टनः ॥ ३४ ॥ आ-
ग्नेयत्रैक्यमिन्द्राय द्वैक्यं मूर्द्धा द्विवेष्टनः ॥ उपांश्वोरन्त-
वेष्ट्यः स्याद्यो देवा द्विवेष्टनः ॥ ३५ ॥ इष्याऽऊर्म्मिस्त्वयै-
कत्वं सविता त्वानुवाकष्टत् । सोमस्य त्विषिर्य्यमैक्यं सप्त
मादो द्विवेष्टनः ॥ ३६ ॥ चत्वस्योत्क्वं च्यैक्यं अवेष्ठाश्चतु-
ष्कान्तवेष्टनः ॥ ऊर्द्धामारोह चायद्दे वर्च्चं विद्याद्द्विवेष्ट-
न ॥ ३७ ॥ द्विष्टत्सोमस्य त्विषिर्हिरण्यरूपौ त्रिवेष्टनः ॥
सोमस्य त्वाऽन्तवेष्ट्यः प्रपर्वतस्य त्रिवेष्टनः ॥ ३८ ॥ प्रजाप-
तयेति द्विवेष्ट्यो रुद्र यत्त्वन्तवेष्टनः । इन्द्रस्य त्वान्तष्टन्मा
ते द्विवृद्गनयऽअन्तष्टत् ॥ ३९ ॥ हंसो द्विष्टत्रेयदसि स्यो-
नासि चान्तवेष्टनः । निषसाद द्विवेष्ट्योऽभिभूरादिच-
तुरैकता ॥ ४० ॥ सविता द्वैष्ट्यमश्विभ्यां युग्मं युग्मं त्रिष्ट-
द्द्विष्टत् । युञ्जानः सप्तसु द्विष्टदादद्दे युगलैकता ॥ ४१ ॥
हस्तादिचतुर्षु द्विवृत्यतूर्वं युगलैकता ॥ अन्यान्ये-
कादशा नद्विष्टत्पृथिव्याः सधस्थात्त्रिष्टत् ॥ ४२ ॥ अपां
पृष्ठन्द्वयोर्द्दि वृत्संवसाथां त्रिवेष्टनः ॥ त्वामग्ने पञ्च-
दशसु द्विष्टत्त्रिवृद्वृषाग्निते ॥ ४३ ॥ ओषध्येकादशाना-
न्द्विष्टन्मखस्य शिरोन्ततः । कृत्वाय सा द्विवेष्ट्यः स्याद्व-
सवस्त्वाऽन्तवेष्टनः ॥ ४४ ॥ अदितिष्ट्वा युगैकत्वमित्रस्य
युगलन्द्विष्टत् ॥ उत्थाय बृहतीति द्वावाकृतिन्त्वन्त-

ष्टेन: ॥ ४५ ॥ मा स्वादिषु च सर्व्वेषु द्विष्टदन्नपते त्रिवृ-
त् ॥ द्विवृद्दृशानोऽध्यायद्विसुपर्णोऽसि नवैकता ॥ ४६ ॥
चिदसीत्यन्तवृद्यन्ते सञ्ज्ञानञ्च त्रिवेष्टनम् ॥ द्विष्ट-
न्मयि ह्यनुवाको ध्रुवासि चतुरैकता ॥ ४६ ॥ काण्डा-
दिति चतुर्ष्वु द्विवृद्विराड्ज्योतिस्त्रयैकता ॥ अषाढाद्या-
स्तथैकोनविंशतिस्युर्द्विवेष्टन: ॥ ४८ ॥ इमम्मा स्यात्त्रिवृदे-
कशफं पशुमिति द्विवृत् ॥ सहस्रमूर्ण्णायुमसो ह्यन्तव-
र्ज्जं द्विवेष्टन: ॥ ४९ ॥ त्वं यविष्ठ द्विवेष्ट्य: स्याद्पा न्वे-
त्यन्तवेष्टन: ॥ नवायं पुरो न वेष्ट्यो ह्यन्त्याभ्यर्धं विना
द्विवृत् ॥ ५० ॥ ध्रुवचितिश्चतुर्ष्वु द्विवृद्दिव्यास्त्वा त्रिवे
ष्टन: । सजूर्म्मूर्द्धा वयश्चेति ह्यनुवाकान्तवेष्टन: ॥ ५१ ॥
इन्द्राग्नी स्याद्विवृद्विश्वकर्म्मा त्वा युगलैकता ॥ आद्य
मूर्द्धाऽशुरन्नभागैकयेत्यनुवाकवृत् ॥ ५२ ॥ अग्ने जातां-
द्विवृच्चित्रवत्सहनाऽने: पुरीषन्त्रिवृत् । एवादिरश्मि-
ना राज्ञो चायम्पुरस्त्वानुवाकवृत् ॥ ५३ ॥ अग्निर्म्मूर्द्धाऽ
नुवाको द्विवेष्ट्योऽन्तात्त्रिवेष्टन: । येन ऽऋषयोऽनुवाको
द्विवृत्पञ्चान्तवेष्टन: ॥ ५४ ॥ प्रोथद्विवृत्त्वन्तवर्जमाणे हि
द्विपरोऽन्तवृत् ॥ नमस्ते चानुवाकेषु सप्तस्वाद्यो द्विवेष्ट-
न: ॥ ५५ ॥ अनुवाकान्तवृत्षट्सु द्रापेऽन्धाष्टसु द्विष्टत् ॥
दशास्मिन्महतीत्याद्या: सर्वे चैवान्तवेष्टना: ॥ ५६ ॥ अ-
श्मन्नूर्ज्जं मिदन्नुद्विवृद्दिमा मेति चयैकता ॥ समुद्रसप्तसु

द्विवृन्नमस्ते हरसे त्रिवृत् ॥ ५७॥ ये देवादिषु च
द्विवृदाजुह्वानोऽन्तवेष्टनः। ताए सवितुः पञ्चसु द्विवृत्
शुक्रज्योत्यनुवाकवृत् ॥ ५८॥ द्विवृदिम एतानुवाकाऽए-
ताऽअर्षंति तस्त्रिवृत् ॥ वाजाद्योऽनुवाकाः स्युरनुवा-
कान्तवेष्टनाः ॥ ५९ ॥ द्विवृद्वाजस्यानुवाकः पयः पृथि-
व्यान्तु त्रिवृत् ॥ ऋताषाडैक्यं वचन्नो हयोर्द्विवृत्पतताम्ना-
वृत् ॥ ६० ॥ त्रिषु स्याऽग्निं युनज्म्यादिष्वनुवाकेषु च द्वि-
वृत्। स्वाहोन्नित्रिवृत्परीतो द्विर्व्यायोश्च द्विः पुनाति ते ॥
६१ ॥ त्रिवस्त्राचत्वाना द्विराद्यह्वर्षान्तवृदाश्विनम् ॥ मो-
दाईयुक्तान्तेजोऽन्तवृद्या व्याघ्रादिषु द्विवृत् ॥६२॥ पञ्चविं-
शतिषु मन्त्रेषु स्यात्पितृभ्यः स्वधान्तवृत् ॥ अङ्गनुहारमस्तु
द्विवृदिमं० हविरिति त्रिवृत् ॥ ६३ ॥ उदीरतादिषु
द्विवृत् क्रमश्चैव तु वेष्टनम् । त्वया त्रिवेभ्यः प्रथ-
मा दृवैक्यं लोमानि च द्विवृत् । ६४ ॥ शृद्वह्रोर्यवज्ञं स्य ह्वे-
वाध्यायः सर्वार्धवेष्टनः ॥ स च शुद्धेर्व्यमन्तः स्यादस्य यस्मि-
न्पदे द्विवृत् ॥ ६५ ॥ इमर्मा स्यादिषु द्विवृद्धोता यज्ञत्सु
चान्तवृत् । त्रिवृत्पूर्वाश्विनौ छागाद्यन्तवृत्तदनन्तरम् ॥
६६ ॥ त्रिवृत्पराश्विनौ छागौ वनस्पत्यग्निचान्तवृत् ।
देवस्वस्त्यादिषु द्विवृद्देवो स्यात्यन्तवेष्टनः ॥ ६७ ॥
अग्निनद्य च स्वपस्या त्वामद्येति नयेकता ॥ तेजोन्त-
वृदिमा द्विवृद्भिषा युगलैकता ॥ ६८ ॥ नद्विवृद्यो अग्नी-

न्तयेऽ न्तावृद्विक्काराऽनुवाकवृत् ॥ हिरण्यपाण्यादिन-
वाजीजनस्य द्विवेष्टनः ॥ ६९ ॥ कायादयोऽनुवाकस्यानु-
वाका ह्यन्तवेष्टनः ॥ हिरण्यगर्भेत्यध्याये प्रजापतयऽन्त-
वृत् ॥ ७० ॥ यः प्राणतो द्विवृच्चन्द्रमास्तदित्यन्तवेष्टनः ॥
युञ्जन्तीति त्रिषु द्विवृद्रसवो यमलैकता ॥ ७१ ॥ त्रिषु चतुर्षु
वायुष्वा पञ्चसु स्याद्द्विवेष्टनः ॥ अग्निः पशुरभिव्य-
वज्जं वृद्विवृद्वाम्वयैकता ॥ ७२ ॥ उत्सक्थ्याद्यनुवाकेषु
पञ्चसु स्याद्द्विवेष्टनः ॥ अम्बस्वारभ्य चत्वारः सोमा-
दर्यान्तमेकता ॥ ७३ ॥ रोहितादूर्ध्वं समायुक्तः शितिर-
न्ध्रोऽन्तवेष्टनः ॥ शुद्धवालस्य प्रष्ठत्यवदित्याद्यन्तमेकता ॥
७४ ॥ वृद्धयज्ञापन्नगादि द्वैक्यं शिल्पाख्यायान्तवृत् ॥ स-
प्तमद्व्यनुवाकेषु मन्त्राणामन्तवेष्टनम् ॥ ७५ ॥ आद्यं चैवा-
नुवाकानामन्तकं चानुवाकवृत् ॥ पञ्चमूर्ध्वानुवाकेषु
द्विवृदिमा नु कं त्रिवृत् ॥ ७६ ॥ अग्निरश्मीति त्रिवृद्द्विवृद-
न्तरेषु त्रिषु त्रिवृत् ॥ वैश्वानरं चैव विद्यादग्नि-
कवर्षेण चान्तवृत् ॥ ७७ ॥ वैश्वानरस्य सुमतावादयः ष-
ड्द्विवेष्टनः ॥ द्विवृत्समास्त्वेत्यऽध्याय स्वापस्विदन्त्यवेष्टनः ॥
७८ ॥ संवत्सरोऽसि द्विवृदित्यन्वाकोऽनुवाकवृत् ॥ होता
यक्षदेकादशपूर्वश्चैवापरो द्विरत् ॥ ७९ ॥ देवं बर्हिरप-
रो द्विवच्चिमुष्णिहमात्रिका ॥ ऊर्ध्वंतऽर्धगणांतेषु त-
त्तन्मन्त्राणतान्तवृत् ॥ ८० ॥ द्विवेष्टमिन्द्राय वयोधसऽद्-

त्यन्तयोर्द्वयोः ॥ समिद्धोऽअञ्जन्नध्याये मन्त्राः सर्वे द्वि-
वेष्टनाः॥ ८१ ॥ अन्त्यानामनुवाकानां त्रयाणामनुवाकव-
त् । द्वाविंशद्वाजराध्यायौ बृहन्निदिति चान्तवृत् ॥
८२ ॥ द्वाविंशदजाग्रतोऽध्यायो द्युभिरक्तुभिरन्तवृत् । त्रि-
स्थानि च विभक्तारं द्वाविंशदन्ये तु वेष्टनाः ॥ ८३ ॥ सहस्र-
शीर्षामन्त्रेषु चतुर्विंशतिषु द्विवृत् । न तस्य त्रिवृदेषो ह
येनद्यौर्दंशसु द्विवृत् ॥ ८४ ॥ त्रिवृद्द्युभिरह्नोभिस्तु द्विवृ-
द्वायुः पुनाति च । सविता त्रिवृदन्ये द्विवृत्स्योना पृथिवी त्रि-
वृत् ॥ ८५ ॥ ऋचँवाचन्त्रिवृदन्तेऽन्त्यार्द्धवर्जं द्विवेष्टनः ॥
ऊतिभिः सहितः कया त्वमादिचतुष्षु द्विष्टत् ॥
८६ ॥ अहानिशन्त्विष्टद्वीरगिष्टयऽइति द्विष्टत् ॥
द्यौः शान्तिरन्तवेष्ट्यः स्यादृहते दृꣳह त्रिवेष्टनः ॥
८७ ॥ ज्योतेऽनष्टन्नमस्तेऽस्तु यतस्तच्चक्षुश्च द्विष्टत् ।
आददे देविदेव्यश्चेतीन्द्रैक्यं प्रैत्विति द्विष्टत् ॥ ८८ ॥
मखस्यास्य नवैक्यं यमाय त्रितयैकता ॥ द्विष्टत्ग-
भोऽनुवाकस्तु विश्वासान्त्यं विना त्रिवृत् ॥ ८९ ॥ आददे-
चतुष्कैकं यस्ते द्विवृत्परोऽन्तवृत् । समुद्राय तद्द्वित्रैक्यं य-
मायेति द्विवेष्टनः ॥ ९० ॥ विश्वाऽआशाः पञ्चैक्यं स्वा-
हा पूर्णोऽनुवाकवृत् ॥ अभीमन्तु द्विवृद्यातेचतुष्कैक्यस्त्रि-
द्विवृत् ॥ ९१ ॥ यावतीत्यनुवाकैक्यन्त्विषः सꣳवृगथान्तवृत् ॥
स्वाहा प्राणानुवाकानामष्टानामनुवाकवत् ॥ ९२ ॥ आ-

याशाय युगैकत्वं यमायेत्यन्तवेष्टनः ।। ६२।। ईशावास्य-
मिदं सर्व्वं द्विवेष्ट्यं सर्व्वसम्मतम् । ४ ।। इति क्रमकारि-
का शिक्षा समाप्ता ॥

---

# पाणिनीयशिक्षा ॥

श्रीगणेशायनमः ॥

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा ॥ शास्त्रानु-
पूर्वं तद्विद्याद्यथोक्तं लोकवेदयोऽः ॥ १ ॥ प्रसिद्धमपि श-
ब्दार्थमविज्ञातमबुद्धिभिः ॥ पुनर्व्यक्तो करिष्यामि वा-
चऽउच्चारणे विधिम् ॥ २ ॥ त्रिषष्टिश्चतुःषष्टिर्वा वर्णाऽः
शम्भुमते (१) मताऽः ॥ प्राकृते संस्कृते चापि स्वयं प्रोक्ताऽः
स्वयम्भुवा ॥ ३ ॥ स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंश-
तिः ॥ यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमा स्मृताः ॥ ४ ॥
अनुस्वारो विसर्गश्च ॅकॅपौ चापि पराश्रितौ ॥ दुःस्पृष्टश्चे-
ति विज्ञेयो ऌकारःप्लुतएव च ॥ ५ ॥ १ ॥ आत्मा बुद्ध्या-
(२) समेत्यार्थान्मनो युङ्क्ते विवक्षया ॥ मनःकायाग्नि-
माहन्ति स प्रेरयति मारुतम् ॥ ६ ॥ मारुतस्तूरसि चरन्म-
न्द्रं जनयति स्वरम् ॥ प्रातःऽसवनयोगं तञ्छन्दो गायत्र-
माश्रितम् ॥ ७ ॥ कण्ठे माध्यंदिनयुगं मध्यमं त्रैष्टुभानुग-

---

१ । सम्भवतो मतः । इति "क" पुस्तकपाठः ।

(२) समत्थ्यार्थान् (२) इति "ख" पुस्तकपाठः ॥

म् ॥ तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥८॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ॥ वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥९॥ स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः ॥ इति वर्णविदः प्राहुर्निपुणं तं निबोधत ॥ १० ॥ २ ॥ उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ॥ ह्रस्वो दीर्घः प्लुत इति कालतो नियमाऽचि ॥ ११ ॥ उदात्ते निषादगान्धारावनुदात्तेऽऋषभधैवतौ ॥ स्वरितः प्रभवा ह्येते षड्मध्यमपञ्चमाः ॥१२॥ अष्टौ स्थानानि वर्णानामुरः कंठः शिरस्तथा ॥ जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ १३ ॥ ओभावश्च विवृत्तिश्च शषसा रेफ एव च ॥ जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १४ ॥ यद्योभावप्रसन्धानमुकारादि परं पदम् ॥ स्वरांतं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥१५॥३॥ हकारं पञ्चमैर्युक्तमंतस्थाभिश्च संयुतम् ॥ औरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥१६॥ कंठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ॥ स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥ १७ ॥ जिह्वामूले तु कुः प्रोक्तो दंत्योष्ठ्यो वः स्मृतो बुधैः ॥ एऐ तु कंठतालव्या ओऔ कण्ठोष्ठजौ स्मृतौ ॥ १८ ॥ अर्धमात्रा तु कण्ठ्यस्य ह्येकारैकारयोर्भ-

वेत् ॥ ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥ १९॥
संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् ॥ घोषा वा सं-
वृताः सर्वे अघोषा विवृताः स्मृताः ॥२०॥४॥ स्वराणामू-
ष्मणां चैव विवृतं करणं स्मृतम् ॥ तेभ्योऽपि विवृतावेङौ ता-
भ्यामैचौ तथैव च ॥२१॥ अनुस्वारयमानां च नासिकास्था-
नमुच्यते ॥ अयोगवाहा विज्ञेयाऽआश्रयस्थानभागिनः ॥
२२ ॥ अलाबुवीणानिर्घोषो दन्त्यमूल्यस्वरानुगः ॥ अ-
नुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च ॥२३॥ अनुस्वारे
विवृत्यां तु विरामे चाक्षरद्वये ॥ द्विरोष्ठ्यौ तु विगृह्णी-
याद्यत्रौकारवकारयोः ॥ २४ ॥ व्याघ्री यथा हरे-
त्पुत्रां दंष्ट्राभ्यां न च पीडयेत् ॥ भीता पतनभेदाभ्यां त-
द्वद्वर्णान्प्रयोजयेत् ॥२५॥५॥ यथा सौराष्ट्रिका नारी त-
क्राँऽइत्यभिभाषते ॥ एवं रङ्गाः प्रयोक्तव्याः खेअराँ इ-
व खेदया ॥२६॥ रङ्गवर्णं प्रयुञ्जीरन्नो ग्रसेत्पूर्वमक्षरम् ॥
दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ॥२७॥ हृद-
ये चैकमात्रस्तु अर्धमात्रस्तु मूर्धनि ॥ नासिकायां तथार्धं च
रङ्गस्यैवं द्विमात्रता ॥ २८ ॥ हृदयादुत्करे तिष्ठन्कांस्येन
समनुस्वरन् ॥ मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्श-
नम् ॥२९॥ मध्ये तु कंपयेत्कंपमुभौ पार्श्वौ समौ भवेत् ॥
स रंगं कंपयेत्कंपं रथीवेति निदर्शनम् ॥ ३० ॥ एवं

वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः ॥ सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥३१॥६॥ गीती शीघ्री शिरःकंपी तथा लिखितपाठकः ॥ अनर्थज्ञोऽल्पकंठश्च षडेते पाठकाधमाः ॥ ३२ ॥ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः ॥ धैर्यं लयसमर्थं च षडेते पाठका गुणाः ॥ ३३ ॥ शङ्कितं भीतमुद्घुष्टमव्यक्तमनुनासिकम् ॥ काकस्वरं शिरसि गन्तथा स्थानविवर्जितम् ॥ ३४ ॥ उपांशु दष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् ॥ निष्पीडितं ग्रस्तपदाक्षरञ्च वदेन्न दीनं न तु सानुनास्यम् ॥ ३५ ॥ प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन ॥ मध्यंदिने कण्ठगतेन चैव चक्राह्वसङ्कूजितसंनिभेन ॥ ३६ ॥ तारन्तु विद्यात्सवनं तृतीयं शिरोगतन्तच्च सदा प्रयोज्यम् ॥ मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन ॥३७॥७॥ अचोऽस्पृष्टा यणस्त्वीषन्नेमिस्पृष्टाः शरः स्मृताः ॥ शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥ ३८ ॥ यमोऽनुनासिका नह्रौ नादिनो हझषः स्मृताः ॥ ईषन्नादा यणो जश्च श्वासिनस्तु खफादयः ॥ ३९ ॥ ईषच्छ्वासांश्चरो विद्याद्गोर्धामैतत्प्रचक्षते ॥ दाक्षीपुत्रः पाणिनिना येनेदं व्यापितं भु-

वि ॥४०॥७॥ छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्य-
ते ॥ ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥४१॥ शि-
क्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ॥ तस्मात्साङ्गम-
धीत्यैव ब्रह्मलोके महीयते॥ ४२ ॥८॥ उदात्तमाख्या-
ति वृषोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा ॥ उपान्त-
मध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ॥४३॥ उ-
दात्तं प्रदेशिनीं विद्यात्प्रचयं मध्यतोऽङ्गुलिम् । निहतं तु
कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥४४॥ अन्तोदात्तमा-
द्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् ॥ मध्योदात्तं स्व-
रितं द्व्युदात्तमिति नवपदशय्या ॥ ४५ ॥ अग्निः सो-
मः प्र वो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती ॥
अग्निरित्यन्तोदात्तं सोम इत्याद्युदात्तं प्रेत्युदात्तं व इत्य-
नुदात्तं [illegible] नीचस्वरितम् ॥ ४६ ॥ हविषां मध्योदा-
त्तं स्वरिति स्वरितम् ॥ बृहस्पतिरिति द्व्युदात्तमिन्द्राबृ-
हस्पती इति त्र्युदात्तम् ॥४७॥ अनुदात्तो हृदि ज्ञे-
यो मूर्ध्न्युदात्त उदाहृतः ॥ स्वरितः कर्णमूलीयः सर्वा-
स्ये प्रचयः स्मृतः ॥४८॥९॥ चाषस्तु वदते मात्रां द्विमात्रं त्वे-
व वायसः(१) ॥ शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रक-
म् ॥४९॥ कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् ॥ न त-

(१) द्विमात्रं वायसोऽब्रवीत् इति "ख" पुस्तकपाठः ॥

स्वपाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ ५० ॥ सुतीर्थादागतं व्यक्तं स्वाध्यायं सुव्यवस्थितम् ॥ सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥५१॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ५२ ॥ अनक्षरं ह्यनायुष्यं विस्वरं व्याधिपीडितम् ॥ अक्षताः शस्त्ररूपेण वज्रं पतन्ति मस्तके ॥ ५३ ॥ हस्तहीनन्तु योऽधीते स्वरवर्णविवर्जितम् ॥ ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥ ५४ ॥ हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ॥ ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥५५॥११॥ शङ्करः शाङ्करीं प्रादाद्दाक्षीपुत्राय धीमते ॥ वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः॥५६॥ येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ॥ कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥ ५७॥ येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ॥ तमश्चाज्ञानजम्भिन्नं तस्मै पाणिनये नमः ॥ ५८ ॥ अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया ॥ चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥५९ ॥ त्रिनयनमभिमुखनिःसृतामिमां य इह पठेत्प्रयतश्च सदा द्विजः ॥ स भवति धनधान्यपशुपुत्रकीर्तिमानतुलं च सुखं समश्नुते दिवीति

वीति ॥ श्लोकः ॥ ६० ॥ अथ ष्ठिलामात्मो
म्न ह्कारं स्वराणां यथा गौत्यचोऽस्पष्टोदात्तं चाषड्
रएकादश ॥ इतिवेदाङ्गनासिकाशिक्षा समाप्ता